THE

PRINCESS OF WALES

SARASWATI BHAVANA TEXTS

No. 27

( MONOGRAPH No I. )

---

The

# VIDVACHCHARITA PAÑCHAKAM

GOVERNMENT SANSKRIT LIBRARY.

BENARES.



1928

Price, Rs. 2.]

THE

PRINCESS OF WALES

# SARASWATI BHAVANA TEXTS

*No. 27*

( Monograph No I. )

—o—

EDITED BY

GOPÎ NÂTHA KAVIRÂJA



THE

# VIDVACHCHARITA PAÑCHAKAM



*Printed by Jai Krishna Das Gupta*
*At the Vidya Vilas Press, Gopal Mandir Lane,*
*Benares City.*

1928

॥ श्रीः ॥

# विद्वच्चरितपञ्चकम् ।

( अभिनवनिबन्धमालायाः प्रथमपुष्पम् )

साहित्याचार्येण खिस्ते-इत्युपाख्य-
नारायणशास्त्रिणा प्रणीतम् ।

श्रीमद्गोपीनाथकविराजमहाशयनिबद्धभूमिकोपबृंहितम् ।

THE

# VIDVACHCHARITA PAÑCHAKAM

BY

Nārāyaṇa S'āstrī Khiste, Sāhityāchārya,
Assistant Librarian,
Govt. Sanskrit College Library,
Sarasvatī Bhavana, Benares.

With an Introduction
by
Gopīnātha Kavirāja, M. A.,
Principal, Govt. Sanskrit College,
Benares.

1928.

* श्रीः *

# सूचीपत्रम् ।

# भूमिका ।

अथोपक्रम्यते **विद्वच्चरितपञ्चका**ख्यं गद्यपद्यमयं पुस्तकमिदं विरचय्य प्रकाशयितुम् । पुस्तकेऽस्मिन् भारतललामभूतानां पञ्चानां काशीस्थविदुषां यशोऽवदातं चरितमुपवर्णितं वर्तते । ये खलु काशीवास्तव्या विद्वांसो विद्यायां गौरवे च दिगन्तविश्रान्तकीर्तयो लोकोत्तरप्रतिभाजुषः सर्वतन्त्रेष्वप्रतिहतसञ्चारा आधिकारिकमण्डलमण्डनायमाना आसन् । येषां ज्ञानगरिमाणमध्यापनपाटवं चरित्रसम्पदं चाकलय्य नानादिग्देशेभ्यः कियन्तो जनाः संशयाक्रान्तचेतसः संशयानपनेतुं, विविदिषवो विद्यामधिगन्तुं, तत्त्वजिज्ञासवस्तत्त्वोपलब्धेरुपायं परिज्ञातुं, तदन्तिके वस्तुकामाः समागच्छन् । तेष्वेव प्राधान्येन विराजमानाः प्रस्तुतग्रन्थनायकभूता गीर्वाणवाणीसेवकाः पञ्चापि बुधेन्द्राः । अद्यत्वे समुत्कर्षेण विलसन्त आर्य्यावर्त्तीयाः प्रायः सर्वेऽपि विद्वांस एषामेव शिष्यकल्पाः, साक्षात् परम्परया च शिष्या एव वा । साहित्ये व्याकरणे दर्शनादिशास्त्रेषु चैते तदानीन्तनायां पण्डितभूयिष्ठायामपि संसद्यप्रतिस्पर्धिनश्चक्रवर्तिन इव सत्कृता आसन्निति तत्कालपरिस्थितिज्ञानामनुभवः ।

असिवरुणयोरन्तरालवर्तिनी वाराणसीति व्यपदिश्यमाना शङ्करनगरी प्राचीनकालादेव विद्यानां कलानां च चर्चायाः केन्द्रभूता राजते इत्यतिरोहितं सर्वविदुषाम् । ब्रह्मविद्याया अनुशीलनमत्रैवानन्दकानने सम्यगभूदितीतिहासडिण्डिमः । जीवानां प्राणप्रयाणोत्सवे दक्षिणकर्णे तारकब्रह्ममन्त्रं ददतो भगवतः शशिशेखरस्य कृपाकणिकाया उपलिप्सया शरणं गतैर्मुमुक्षुभिरियमेव मोक्षनगरी क्षेत्रत्यागमविधित्सुभिराश्रीयते स्म । बहूनां जन्मनामन्ते तीव्रसंवेगेन दीर्घकालनिरन्तरसेवनादप्यनभिव्यज्यमाना ब्रह्मविद्या नगर्यामिह क्लेशादिकमन्तरा केवलं पिण्डपातेनैव समुपलभ्यते । अलौकिकमिमं क्षेत्रमहिमानं स्मरन्तो युगे युगे कियन्तः श्रद्धालवः साधवो विद्वांसश्च तत्र तत्र यथाशक्ति स्वकार्यसम्भारं सम्पाद्य, संसारस्यासारतां कदलीदलसम्मितां विद्युल्लेखावच्चञ्चलतां च विमृश्य, कलिकलुषहारिणीं परमशान्तिविधायिनीं गङ्गाम्बुशिवचरणसपर्यामन्ते मरणमङ्गलं चाभिप्रेत्य वार्द्धके मुनिवृत्तयः काशीमागत्य वसन्ति स्म ।

अस्याः पुर्या माहात्म्यं पूर्वतनकालादारभ्य तत्तत्सम्प्रदायप्रवर्तकैर्धर्माचार्यैरुररीक्रियमाणं भक्तैरुपगीयमानं च दरीदृश्यते । शाक्यकुलप्रदीपो गौतमो **बुद्धो** गयायां निरञ्जनातटे सम्यक्सम्बोधिमुपलभ्य तत्प्रचारार्थं वाराणसीमाजगाम । जैनतीर्थङ्करस्य **पार्श्वनाथस्यापि** कर्मक्षेत्रमियमेव नगर्यासीत् । बौद्धजातकेषु वाराणस्या महद्गौरवमुद्घोषितमुपलभ्यते । काशिकानिर्माणमत्रैवाभूदिति किंवदन्ती । **दामोदरगुप्तस्य** स्थितिरपि काश्यामेवासीत् । चीनपर्यटकानामत्रागमनं स्थानीयमाहात्म्यनिबन्धनमेव । न केवलं शास्त्रेषु विद्यासु वा कलाशिल्पेष्वपि विविधेषु नगरीयं नितरां भ्राजते स्म । अलं प्रत्नकालतत्त्वविमर्शनेन ।

मध्ययुगे च यवनाधिकारेऽपि गौरवमस्याः समुज्ज्वलतममिव विभाति स्म । तदानीं संस्कृतवाङ्मयस्य यादृशी समृद्धिरुपाजनि काश्यां कृतवसतीनां विदुषां तत्तच्छास्त्रीयग्रन्थरचनैव तत्प्रयोजिका । ज्यौतिषे **रङ्गनाथादयः**, धर्मशास्त्रे **नन्दपण्डिताः**, मीमांसायां धर्मशास्त्रे च **नारायणभट्टवंशीयाः खण्डदेवाश्च** न्यायशास्त्रे **महादेवपुणताम्बेकर–कृष्णंभट्टादयः** सांख्ये वेदान्ते च **विज्ञानभिक्षु–वेदान्तिमहादेवादयः** व्याकरणे **भट्टोजीदीक्षित–नागेशादय; शेषवंशीयाश्च** । तन्त्रे **नीलकण्ठ–भास्कर-राय–प्रेमनिध्यादयः**, वेदे **महीधराः**, वेदान्ते **मधुसूदन–नृसिंहाश्रमादयः** एते चान्ये च मर्मज्ञा बहवः पण्डितप्रकाण्डाः काशीवास्तव्या एवासन् । साहित्यसम्राजो **जगन्नाथपण्डितराजाः** सर्वतन्त्रस्वतन्त्रा **अप्पय्यदीक्षिताः** नैय्यायिकप्रवरा **रुद्रन्यायवाचस्पतिविश्वनाथन्यायपञ्चाननादयश्च** कियन्तं कालं काशीवासमकुर्वन् । अन्तिमेव यसि नैयायिकशिरोमणयः **शङ्करमिश्रा** अपि काश्यामवात्सुः ।

पुरा बुद्ध इव मध्ययुगे **शङ्कराचार्यरामानुजादय** इव वर्तमानयुगे **श्रीकृष्णचैतन्यो वल्लभाचार्यश्चात्र** धर्मप्रचारमकुरुताम् । तथा **कबीरादयो रामानन्दादयश्च** ।

धर्मे दर्शने शास्त्रालापे वा यस्मिन् कस्मिन्नपि विषये प्रतिपक्षदलनपूर्वकजयस्तम्भस्थापनमुखेन स्ववैदुष्यप्रतिष्ठार्थं काशीसमागम आवश्यकतया परिगणित आसीदिति प्राचीनेतिहासदृष्ट्या स्फुटं प्रतीयते । अत्र तदानीन्तनकाशीस्थपण्डितानां किमपि महत्त्वमेव निदानम् । भारतवर्षे सर्वेभ्योऽपि प्रान्तेभ्यः सम्प्रदायनैरपेक्ष्येण प्रस्थानविशेषतया च विद्वांसः समागत्य पुरीमिमामधिवसन्तिस्म । मुषितेऽपि पूर्वगौरवेऽद्यापि पूर्ववदेव

काशीप्रीतिर्जनहृदि समुल्लसन्ती दृश्यते । धर्मसङ्कटे व्यवस्थादिकं काशीबुधानामेव सर्व-मान्यतया निर्णायकतया च सर्वत्र परिगृह्यते ।

इयं तु चिरादेव बाहिरागतविद्वज्जनेभ्यस्तत्तद्विषयधुरन्धरेभ्यस्तद्वंश्येभ्यश्चाश्रयं ददती गृहीतच्छाया स्वच्छान्तरा स्फटिकाशिलेव परमपि जनमौदार्येणात्मीयं विदधाति । येषामुत्तमश्लोकानां नामधेयानि चरितानि विद्यावैभवं चाकर्ण्य लोकचित्तमाकृष्यते प्रायस्ते सर्वे इत्थम्भूताः काशीवासिनोऽपि बाह्या एव । परं तु बाह्या अपि ते जननीत्वेन काशीमधिश्रयन्तः काशीपुत्रेष्वेव सुतरां गणनार्हतां याताः । अद्य यावत् काश्या विजयवैजयन्त्येतेषामेव करधृताऽवलम्बते ।

कालचक्रस्यावर्तनेन सर्वत्रैव किं नाम न परिवर्तनं सङ्घटितम् ? । न जाने भगवत्या नियतेरन्यदपि किं मनसि स्थितम् ? । पुरा यत्र वेदनिर्घोषो वायुं पावयन् श्रोतॄणां देहादीन् शोधयन् मनांसि च विमलीकुर्वन्नुद्गच्छन्नासीत् , तत्राऽधुना जिगीषाप्रयुक्तः श्रुतिकठोरः कलहध्वनिः प्रवर्तते । पुरा यत्राग्निहोत्रशाला देवायतनं वाऽऽसीत् यद्दर्शनेन द्रष्टुर्नयनोत्सवः समजायत, तत्राऽधुना दीपोज्ज्वला नृत्यशाला रूपाजीवाभिरुपजीव्यमाना विलासिभिर्नागरिकैः संसेव्यमाना नेत्रपथे पतति । पुरा यत्र विद्यागोष्ठीषु शास्त्रार्थविचारकलकलोऽभीक्ष्णमश्रूयत, तत्रेदानीमवसरविनोदार्थं व्यर्थ एव वागुल्लासः समुज्जृम्भते । निदर्शनमिदं भगवतः कालस्य महिम्नः । किमत्र वक्तव्यम् ? कथं वैतत् प्रतिविधेयम् ? । कुत्र तद् ब्राह्मण्यं गतं ?, क्व वा सा विद्वत्ता ? तत्तपः, तत् शौचं, सोऽपरिग्रहः, सा ब्रह्मनिष्ठा, विद्यानुरक्तिश्च सर्वमेव तत् कालकुक्षौ निहितप्रायं विलीयमानमिव दृश्यते । ये तावद् ब्राह्मणा विषादिव सम्मानादुद्विजमाना अखिलमैश्वर्यं तृणमिव तुच्छीकुर्वन्तो यथा कथञ्चिदुदरपोषणेनैव तृप्यन्तः सन्तोषधना निरन्तरं तपसि विद्याचर्यायां धर्मानुशीलने च दत्तचित्ता आसन् , तेषां वंशीया इदानीं कल्पितं मानमेव बहु मन्यमानास्तदर्थमात्मानं बहुधाऽऽयासयन्तः, सति प्रयोजने तपसो विद्यायाः शीलस्य च विसर्जनेऽपि कुण्ठाविहीना दृश्यन्ते । विद्वद्भिस्तु सम्मानो नान्विष्यते स स्वयमेवागत्य तान् भूषयतीति तैर्विस्मृतम् । यदि ते निरीहा विद्याव्यसनिनो विद्याप्रचारे धृतव्रतास्तदेकनिष्ठाः पुनरपि भवेयुस्तर्हि जनानां श्रद्धापुष्पाञ्जलिः तत्पादेषु स्वभावत एवोपगमिष्यतीति निर्विवादम् ।

तदिदं साम्प्रतं प्राप्तकालं, यत् पूर्वसूरीणां चरितस्मरणेन तदनुजिहीर्षया स्वात्मनः संस्कारसाधनप्रयासो नाम। महतां हि चरितमनुस्मर्यमाणं सर्वथाऽपि कल्याणमातनोति। समयप्रभावतो देशे काले च यादृशी परिस्थितिरिदानीं समुपस्थिता; तामवलोक्य कस्य नाम सहृदयस्य हृदयं न दूयते। यदि प्राक्तनादर्शः पुनरपि चेतसि लब्ध प्रतिष्ठो भवेत्, लोकोत्तरवैदुष्यसम्पत्तावपि लोकोत्तरा विविदिषा, पठनपाठनाद्यतिरिक्तविषये विगतस्पृहत्वं, सरलो जीवनसम्भारः, ऋजुः स्वभावः; धर्मभीतिस्तपश्चर्या विनयश्चेतःशुद्धिरलोभश्च यद्येते गुणाः पुनरपि विद्वत्सु पदं लभेरन् तर्ह्याशंसे कथमपि समाजस्याऽस्य समुद्धरणं सम्भवति। अन्यथा तदाशा दूरापेता।

एतस्य समालोचनेन प्राचीनानामप्राचीनानां च विदुषां चरितानि विवृत्य प्रकाशनीयानीति सिद्धम्। महदेतत् कार्यं सम्भूय सम्पाद्यं नैकेन सुशकम्। विद्यापीठेषु काश्या मूर्धाभिषिक्ततमाः तत्रत्या विद्वांस एव सर्वाग्रे गण्याः, तदनन्तरं देशान्तरीयाः। तत्र च सन्निकर्षादाधुनिककालीना एव प्रथममालोच्याः। तत्रापि राजकीयमहाविद्यालयसंसृष्टास्तद्विद्यालयसंसर्गवतो निबन्धकस्य दृष्ट्या प्राथम्यभाजः। इयमेव समीचीना पद्धतिः।

इमां नीतिमनुसरन् प्रकृतग्रन्थनिबन्धकश्चरितपञ्चकं पञ्चपुष्पघटितशिरोदामकवत् सङ्ग्रथ्य प्रथमोपहारत्वेन विद्वज्जनसविधे विसृजति। प्राप्तपरितोषैर्बुधवर्यैः साधुत्वेन परिगृहीतेऽस्मिन् समुद्यमे जातोत्साहेन ग्रन्थकृता चरितान्तराण्यप्यनुपदं प्रकाश्य विदुषां पुरत उपस्थापयिष्यन्ते। आशास्यते चान्यैरपि विद्वद्भिरनेन मार्गेण मार्गान्तरेण वा पूर्वतरकालीनानां विद्वज्जनानां चरिताख्यानं विधास्यते। ग्रन्थोऽयं लघुरपि महार्थकस्तादृशविवेचकानामामन्त्रणरूपः तेऽस्मिन् महति समारम्भे दत्तकरावलम्बा भवन्त्विति।

एतच्चरितपञ्चकस्य नायकभूताः पण्डितवर्याः सर्वेऽपि महामहोपाध्यायपदभाजो वाराणसेयराजकीयमहाविद्यालयस्याध्यापकपदान्यलंकुर्वन्तो गौरवस्तम्भा इव पाठशालाया आसन्। तत्र केवलं चतुर्थचरितनायकान् **शिवकुमारशास्त्रिणो** विहाय सर्वेऽपि तत्रैवावसरग्रहणात् प्राक् संसक्ता आसन्। तत्कालीनपण्डितसमाजे न केवलं काशीस्थे आर्यावर्तीये वा परं तु समग्रभारतवर्षीये एतेषां स्थानमतिपूज्यमासीदिति प्रागेवावेदितम्।

तत्र साहित्ये व्याकरणे धर्मशास्त्रे दर्शने तथा चागमादिशास्त्रान्तरेष्वपि **गङ्गाधरशास्त्रिणः**, न्यायादिदर्शनेषु धर्मशास्त्रे च **कैलासचन्द्राः**, व्याकरणे पाणिन्यवतार-

कल्पा **दामोदरशास्त्रिणः**, तथा वैयाकरणाग्रेसरास्**तात्याशास्त्रिणश्च** व्याकरणे वेदा-न्तादिदर्शनेषु धर्मशास्त्रादौ च **शिवकुमारमिश्राः** साक्षाद् वाग्देव्या अवतारा इवासन्। एवं महापण्डिता **राममिश्रशास्त्रिणः भागवताचार्याः बापूदेवशास्त्रिणः सुधाकरद्विवेदिनः जयनारायणतर्करत्नाः कालीप्रसादशिरोमणयः** तथा चान्येऽपि तत्तच्छास्त्रनिष्णाताः कोविदा इदानीन्तनपण्डितानामादर्शभूता आसन्।

दिष्ट्या वर्धते ग्रन्थकृत् साहित्याचार्योपाधिकः कविकुलमण्डनः सुरभारतीसेवकः **'खिस्ते'** इत्युपनामकः श्रीमान् **नारायणशास्त्री** यत् तेन लघ्वपि महार्हं रत्नभूतमिदं चरितपञ्चकं सङ्गृह्य प्रकाशनाय प्रयतितम्। विद्वच्चरितावल्याः प्रथम एवायं भागः। आ-शास्यते चास्या द्वितीयादयोऽपि भागा अचिरादेव प्रकाशं गमिष्यन्तीति।

ग्रन्थस्य सम्भाव्यमानदोषादिकमनवधानताप्रयुक्तं वा कथावस्तुशैथिल्यनिबन्धनं वा मुद्राकरप्रमादभूतं वा सर्वमुपेक्ष्य कीर्त्यमानचरितानां विदुषां महत्त्वप्रकर्षे एव दत्तदृष्ट-यः परां प्रीतिमावहन्तु विद्यारसिका बुधवरा इति तेषां पुरतः सप्रश्रयं साञ्जलिबन्धं च भृशं प्रार्थयते।

गवर्नमेण्ट संस्कृत कॉलेज,
काशी।

**गोपीनाथ कविराज।**
एम्० ए० प्रिन्सिपलगवर्नमेण्ट
संस्कृत कॉलेज काशी।



# प्रास्ताविकम् ।



प्रकाश्यमानग्रन्थारम्भे 'प्रास्ताविकं' नाम किञ्चिदवश्यमेव ग्रन्थकर्त्रा प्रकाशकेन वा निबन्धनीयमिति सर्वैरेव शिष्टैरविवादेन समादृतः पन्थाः कथं नाम समुल्लङ्घयितुं शक्येत । यथाशक्ति शिष्टाचारपरिपालनं हि मादृशामविदितसदाचाराणामल्पमेधसां कर्तव्यक्षेत्रे विद्युद्दीपालोकायते । यथामति विचारयतां च नेदमनावश्यकं प्रतिभाति, प्रत्युत ग्रन्थप्रकाशनोद्देश्यपरिज्ञानाय बाढमावश्यकमेव । प्रस्तुतपुस्तकमालाप्रधानसम्पादकैः प्राच्यप्रतीच्यविद्यासम्भेदमहातीर्थाऽभिषेकपवित्रीकृतवाङ्मनःकायैरस्माकं पूज्यतमैः काशिकराजकीयपाठालयप्रधानाध्यक्षैः **प्रभुवरश्रीगोपीनाथकविराज**पूज्यपादैरस्मत्कृतामभ्यर्थनां सदयतया स्वीकुर्वद्भिः सुललितपदोपन्यासा, काशिकायाः प्राचीनमर्वाचीनं चेतिवृत्तमादर्शतलमिव सुस्पष्टं प्रकटयन्ती, कलिकालदौरात्म्यात् विस्मृतप्रायं भारतीयविदुषामादर्शं पुनर्दृढमूलमिव विदधती, प्रस्तुतग्रन्थप्रयोजनं सुविशदं प्रकाशयन्ती, तेषां पाण्डित्यगरिमाणं पदे पदे सहृदयहृदयाह्लादकप्रकारेण ध्वनयन्ती, विस्तीर्णा भूमिका निबद्धैवाऽऽस्ते । तयैव समवसिते प्रयोजने न वयमात्मीयं कर्तव्यशेषं पश्यामः । केवलं यैः सहृदयैः सुहृद्भिरस्मिन् कार्यसम्भारे येन केनाऽप्यध्वना महनीयं साहाय्यमाचरितम् सधन्यवादं तेषां नामोल्लेखनं, अन्यच्च किञ्चित् प्रासाङ्गिकं, विस्मरणेनाऽनुपन्यस्तं पूर्वभूमिकाकारैस्तस्य सर्वस्योपन्यसनमेवाऽस्माकमिदानीं कर्त्तव्यतयाऽवशिष्यते ।

श्रीमत्पूज्यपादगुरुवरमहामहोपाध्याय**श्रीगङ्गाधरशास्त्रितैलङ्ग C.I.E.** पूज्यचरणैः प्रायः पञ्चाशद्वर्षाधिकसमयात्पूर्वमेव निबद्धं स्वकीयगुरुवर**श्रीराजारामशास्त्रि**-श्रीबालसरस्वतीतिप्रथिताऽभिधान**बालशास्त्रि**महोदययोर्जीवनचरितमालोक्य तमेवादर्शं मनसि निधाय दिवं गतानां पूज्यपादानां जीवनचरितं निर्मातव्यमिति बहोः कालात्प्रभृति चेतसि दुर्दमोत्कण्ठा कृतपदाऽऽसीत् । एकतः प्रबलोत्कण्ठा परतश्च स्वायोग्यतासम्भूता शिथिलता, उपहास्यताभीतिश्चेति मिथो विरुद्धवृत्तिक्लिश्यमानानामस्माकं भूयान् समय एवमेव वृथैवाऽपवाहितोऽभूत् । क्व ते महानुभावाः साक्षाद् वाग्देवता-

ऽवताराः श्रीगुरुवराः, ? क्व च तेषां धीरोदात्तं लोकातिगं चरितम् ? क्व वयमल्पधियः पदे पदे सन्देहग्रस्ताः ? तेषां चरितं तादृशैरेव तेषां प्रधानशिष्यैः सुगृहीतनामधेयैः **श्रीमत्पाण्डेयरामावतारशर्म**–महामहोपाध्यायपूज्यवर**श्रीलक्ष्मणशास्त्रितैलङ्ग**-**श्रीदामोदरशास्त्रिगोस्वा**मिप्रभृतिभिरेव साहित्यार्णवकर्णधारैर्निर्मातुं शक्यम् । मादृशैः कृतेऽपि प्रयत्ने नूनमुपहास्यतैव पर्यवस्येत् इति । न च निरवलम्बासीत् साऽस्माकमुपहास्यताभीतिः । कदाचित् मित्रगणे वार्ताप्रसङ्गेन प्रकाशितेऽस्माभिः स्वमनोरथे कर्णाकर्णिकया प्रसृते च तस्मिन् साहित्यसम्राजां समाजे त एवोद्गाराः सैवोपहास्यता स एवाऽस्माकं तिरस्कारः पुनरपि कर्णाकर्णिकयाऽस्माकमन्तिकं वलन् व्याकुलयति स्म बाढमस्माकं गुरुभक्तिप्रवणं चेतः । एवं स्थिते विमनायमानैः पुनरप्यस्माभिस्तूष्णीं स्थितम् । प्रतीक्षितं च चिराय तेषां महात्मनां लेखनीतः प्रसूतं ललितललितं श्रीगुरुचरितम् । परं तु दुरदृष्टेनास्माकं साऽप्याशा मोघैवाऽजनिष्ट ।

अथैकदा वार्तान्तरप्रसङ्गेन चिराद् हृदयक्षेत्रे सुसम्वर्द्धितोऽयमस्मन्मनोरथः श्रीमतां प्रभुवराणां **श्रीगोपीनाथकविराज**महोदयचरणानां निकटे भीतभीतैरस्माभिः प्रकटितः सदयहृदयैः सहृदयशिरोमणिभिः प्रभुवरैस्तत्क्षणमेव सोत्साहमभिनन्दितोऽस्माकं मनोरथः, न केवलमभिनन्दित एव अपि तु दारिद्र्यदुरवस्थामस्माकं सम्यगनुचिन्त्य स्वयंप्रकाशनव्ययभारसहनासमर्थतामास्माकीनां च स्वयमेव सञ्चिन्त्य, राजकीयव्ययेन राजकीयपुस्तकमालायां स्वयमेव तत्सम्पादनं चाङ्गीकृत्य त्वरयैतन्निर्माणे सोत्साहं प्रवर्त्तिता वयम् । प्रतिदिनं च 'कियानंशो निर्मितः स प्रदर्श्यताम्' इति सस्नेहेन नियोगेन प्रत्यहं समुत्साहितैरस्माभिः प्रात्यहिकं निर्माणं तेषां पुरो न्यधीयत । तैश्चाऽव्याजस्नेहसरलोदारस्वभावैस्तत्क्षणमेव तदनुवाच्य योग्यताऽधिकप्रशंसनैर्भृशं लज्जां गमिता वयम् । इत्थं व्यतिकरे प्रायो मासादर्वागेव प्रथमचरितं श्रीगुरुवराणां समाप्तिं गमितम् । अन्ते च प्रभुवरसूचनानुसारेण श्रीगुरुवराणां केषाञ्चन प्रधानशिष्याणां जीवतां मृतानामपि नामोल्लेखो गद्यपद्यमय्या गिरा व्यधीयत ।

अत्रान्तरे बहोः कालात्पूर्वं **हथुवापुरन्दरेण** सम्पादितं, काशीस्थमुख्यपण्डितानां प्रतिफलकमेकमस्माभिरासादितं, दर्शितं च प्रभुवरेभ्यः, तैश्च तदवलोकनक्षणोत्पन्नकल्पनानुसारेण तस्मिन् प्रतिफलके पङ्क्तिशः समुपविष्टानां पञ्चानामपि विदुषां चरितं तेनैव क्रमे-

ण निर्माय **"विद्वच्चरितपञ्चकम्"** इति नाम्ना ग्रन्थोऽयं निर्मातव्य इति वयं समुपदिष्टाः समादिष्टाश्च।

अथ पूर्वचरितमिव चरितान्तराण्यपि प्रात्यहिकनिर्माणाद्यवलोकनतद्भूरिप्रशंसनादिना प्रभुवरैर्वर्धितोत्साहा वयं प्रायो मासद्वयान्तरे सम्यग् व्यरचयाम। इत्थं सम्पूर्णो ग्रन्थः प्रभुवरैरामूलाग्रमवलोक्य जातसन्तोषैः प्रकाशनयोग्यत्वेन निर्द्धारितः। राजकीयपाठशालालङ्कारेभ्यः कतिपयेभ्यो विद्वद्भ्यः, अन्येभ्योऽपि मान्येभ्यः काशिकपण्डितेभ्यः, साहित्यार्णवकर्णधार**श्रीरामावतारशर्मपाण्डेयेभ्यः**, **श्रीगोस्वामिदामोदरशास्त्रि**पूज्यपादेभ्यः, श्रीमन्महामहोपाध्याय**डा० गङ्गानाथझा**महोदयेभ्यः, संयुक्तप्रान्तीयसंस्कृतपाठशालाप्रधाननिरीक्षक**श्रीकाशीरामशर्म**विद्यारत्नेभ्यः, स्वसुहृद्भ्यः पण्डितराज**श्रीराजेश्वरशास्त्रिद्राविड**महोदयेभ्यश्च प्रदर्श्य तैः सर्वैरेव विद्वत्तल्लजैः प्रकाशनयोग्य इति कृताभिनन्दनो ग्रन्थोऽयं निराकुलचेतोभिरस्माभिः पाठकमहाभागानां करकमलेषूपायनीक्रियते। इदमित्थमिदंग्रन्थनिर्माणेतिवृत्तम्। अत्र प्रभुवरसूचनानुसारेण प्रतिचरितं तदन्ते, तत्तत्पण्डितान्तेवासिनां यथोपलब्धनाम्नामुल्लेखः कृत एवाऽऽस्ते। परं तु ग्रन्थमुद्रणानन्तरं बहूनां प्रसिद्धानां तत्तत्पण्डितान्तेवासिनां नामान्युपलब्धानि। तानि सर्वाण्यस्मिन्नवसरे प्रकाशयितुं दुःशकानीति न तैर्विमनायितव्यम्। यदि सौभाग्येन ग्रन्थस्याऽस्य द्वितीयावृत्तिमुद्रणावसरो भवेत्, तर्ह्यवश्यमेव सादरं तन्नामोल्लेखं करिष्याम इति साञ्जलिबन्धं तेभ्यो निवेदयामः।

प्रथमचरिते श्रीगुरुवराणां प्रियतनयैः काशिकराजकीयपाठशालायां साहित्यदर्शनप्रधानाध्यापकैः पूज्यवर**श्रीभालचन्द्रशास्त्रि**साहित्याचार्यमहोदयैर्बहुविधं साहाय्यं वितीर्णमिति केवलं शुष्कधन्यवादार्पणेनैव तेषामानृण्यं न सम्पादयितुं शक्यम्। वस्तुतस्तु गुरुकल्पानां तेषामानृण्यमिह जन्मनि जन्मान्तरेऽपि न सम्भवीति तेषां पुरः सर्वदैव भारभुग्नशिरसो वयम्।

द्वितीयचरिते प्रियसुहृदःश्रीमत्पण्डितवर**ताराचरणभट्टाचार्य**महोदयस्य तल्लिखितसङ्क्षिप्ततमश्रीकैलासचन्द्रजीवनचरितेन सुमहत्साहाय्यं सम्पन्नमिति नूनमनेके धन्यवादास्तस्मै महोदयाय। तस्मिन्नेव चरिते श्रीकैलासचन्द्रमहोदयानां जीवनसम्बन्धिज्ञातव्यविषयान्तरतदन्तेवासिजननामधेयप्रदानादिना, सुहृत्तमस्य प्राच्यप्रतीच्योभयविद्याविदुषः

सम्प्रति कर्णपुराङ्ग्लभाषामहाविद्यालयाध्यापकस्य श्रीमतः **सत्यांशुमोहनमुखोपाध्याय**महोदयस्य, तत्पितुर्भगवद्भक्तिपरायणस्य श्रीकैलासचन्द्रमहोदयानां प्रियशिष्यस्य वैष्णवशिरोमणेः **श्रीललितमोहनमुखोपाध्याय**महोदयस्य च महान्त उपकारा इति द्वाभ्यामपि ताभ्यामनेके धन्यवादाः ।

तृतीयचरिते तच्चरितनायकप्रथमतनयस्य प्रियतमसुहृदः सतीर्थ्यस्य काशिकराजकीयपाठशालायां साहित्याध्यापकस्य **श्रीगङ्गाधरशास्त्रिभारद्वाज**महोदयस्य सर्वाङ्गीणं साहाय्यमन्तरा तच्चरितलिखनं दुःशकमासीदिति सुबहूपकृता वयं तेन सुहृद्वरेणेति तस्मै शतशो धन्यवादाः ।

चतुर्थचरिते तच्चरितनायकप्रियशिष्यस्य काशिकनव्यविद्वत्प्रमुखस्य वैयाकरणशिरोमणेर्दार्शनिकवरस्य **श्रीहाराणचन्द्रभट्टाचार्य**महोदयस्य सोत्साहं सर्वाङ्गीणं साहाय्यमन्तरा तच्चरितोपन्यासो दुःसम्पाद एवासीदिति सुबहूपकृता वयं तेन विद्वद्धौरेयेणेति तस्मै सादरमनेके धन्यवादाः ।

पञ्चमचरिते तच्चरितनायकतनयेन भूयो भूयः सम्प्रार्थ्यमानेनाऽपि वृथाशङ्काकुलेन चिरं साहाय्यदाने वञ्चिता वयं पुनरपि सुहृद्वरं **श्रीगङ्गाधरशास्त्रिभारद्वाज**मभ्यर्थ्य तद्द्वारा तच्चरितनायकपितृव्यतनय**श्रीकृष्णशास्त्रिपटवर्द्धन**महोदयस्य महनीयं साहाय्यमासाद्य तच्चरितं समपूरयामेति **श्रीगङ्गाधरशास्त्रिभारद्वाजश्रीकृष्णशास्त्रिपटवर्द्धन**महोदयाभ्यामनेकान् धन्यवादानर्पयामः ।

प्रतिचरितं तत्तच्चरितनायकजन्मकुण्डलीनिवेशनमभिलषतामस्माकं सविधे प्रथमान्तिमचरितनायकजन्मकुण्डलीसम्पादनाऽऽयासं सुमहान्तमप्यनुभूय तत्तादृशकुण्डलीद्वयमर्पयतः परमसुहृदः साहित्योपाध्याय**जगन्नाथशास्त्रि**होशिङ्गमहोदयस्य तत्तादृशं सुमहत्साहाय्यमवश्यं धन्यवादार्हम् । दुरदृष्टेनावशिष्टानां त्रयाणां चरितनायकानां जन्मकुण्डल्यलाभेन तन्निवेशनविचार एव परित्यजनीय आसीत् ।

मुद्रणात्प्राक् प्रथमचरिते स्खलितमेकमस्माकमुपलभ्य दत्तदृष्टिभिस्तत्प्रदर्शनेन बाढमुपकृता वयं सम्प्रति उदयप्रतापकालेजाख्यपाठशालासंस्कृतद्वितीयपण्डितैः परमसुहृद्भिः साहित्योपाध्याय**वेतालाऽनन्तरामशास्त्रि**भिरिति तेभ्योऽपि धन्यवादार्पणमविस्मरणीयमेव ।

अस्माकं श्रद्धेयैः सुहृद्वरैर्हिन्दूविश्वविद्यालयीयाङ्ग्लविभागे संस्कृताध्यापकैः प्राच्यप्रतीच्यविद्याकोविदैः साहित्याचार्य, एम् , ए, इत्यादिबिरुदावलीसमलङ्कृतैः **श्रीमद्वटुकनाथशर्म**महोदयैरवसरेऽवसरे समुचितसूचनाप्रदानैर्बाढमुपकृता वयं सर्वात्मना तेषां सौहार्द-साहाय्यभारभुग्नाः स्म इति पुण्यमूर्तीनां तेषां पुण्यस्मरणेनैवात्मानं पावयामः ।

येश्च महानुभावैः श्रद्धेयपण्डितवर**श्रीरामावतारशर्म— श्रीदामोदरलाल गोस्वामि**--महामहोपाध्याय**डा॰गङ्गानाथझा**महोदय-**श्रीकाशीरामशर्म** एम्. ए. विद्यारत्न-**श्रीराजेश्वरशास्त्रि**न्यायाचार्यादिभिः स्वामूल्यसमयव्ययमूरीकृत्यैतद्ग्रन्थ-निरीक्षणादिना सुबहूपकृता वयं तेभ्यो महानुभावेभ्यः शतशो धन्यवादान् वितरामः ।

एतद्ग्रन्थमुद्रणपत्र ( प्रूफ ) निरीक्षणादौ, सम्प्रति ज्वरजर्जरैरस्माभिर्भूमिकामुद्रणपत्र-निरीक्षणे,सूचीपत्रनिर्माणे, शुद्धिपत्रसम्पादने च यस्मिन् विश्वासमाधाय निश्चिन्तैरभावि, तस्याऽस्मत्सतीर्थ्य**श्रीकृष्णशास्त्रिवरकल**तनयस्य वर्द्धिष्णोः धर्मशास्त्रशास्त्रिणः, धर्म-शास्त्राचार्यकल्पस्य बालस्याऽपि प्रौढस्येव व्युत्पत्तिशालिनो **वरकल**कुलालङ्कार**श्रीवैद्यनाथशास्त्रिणः** सुमहत्साहाय्यं स्पृहणीयमस्तीति सकौतुकं तदभिनन्दनं बाढं कर्त्त-व्यमस्माकम् ।

सर्वान्ते सर्वप्रधानभूतानां, येषामेव प्रोत्साहनेन, सदुपदेशन, सर्वाङ्गीणसाहाय्यवितरणेन च सुसम्पन्नमिदं कार्यं, तान् पूज्यतमान् **श्रीगोपीनाथकविराज**पूज्यपादान् कैः शब्दैरभिनन्दामः । अथ वा कृतमत्र वाग्व्यापारेण, यत्र हृदयमेव साक्षि, तत्र न वाचामवसरः । तेषामेवेदं कार्यं तैरेव तदीयद्वारा सम्पादितमिति कुतोऽभिनन्दनावकाशः।

पर्यवसाने पाठकमहाभागान् साञ्जालिबन्धमिदमेव प्रार्थयामहे, यत्तद्दोषपराङ्मुखैः महनीयचरितास्वादैकलुब्धैरिदमालोचनीयं, भ्रमप्रमादादयो मानुष्यकसुलभा इति क्षन्तव्याः सर्वथा वयम् ।

| | |
|---|---|
| **काशीस्थराजकीय पुस्तकालयः**<br>**सरस्वतीभवनम्**<br>**काशी**<br>**महाष्टमी, सं० १९८५** | विद्वज्जनवशंवदः<br>**नारायणशास्त्री खिस्ते** |

श्रीः

# विद्वच्चरितपञ्चकस्थविषयाणां सूची ।



काशीस्थमुख्यपण्डितमण्डलीयम् ।
हथुवापुरपुरन्दरेण दर्शनार्थं प्रतिकृतिमापादिता ।

१ म॰म॰ श्री गङ्गाधरशास्त्री सी॰आई॰ई॰ २ म॰म॰ श्री कैलासचन्द्रशिरोमणिः
३ म॰म॰ श्री दामोदरशास्त्री भारद्वाजः ४ म॰म॰ श्री शिवकुमारशास्त्री मिश्रः
५ म॰म॰ श्री रामकृष्णशास्त्री ( तात्याशास्त्री पटवर्द्धनः )

॥ श्रीः ॥

# अथ विद्वच्चरितपञ्चकम् ।

मङ्गलम् ।

यस्मिन् प्रसादसुमुखे विमुखीभवन्ति

विघ्नाः समीहितविधौ दुरितैकनिघ्नाः ॥

सिन्दूरसुन्दरमुखं शिशुचन्द्रमौलिं

स्तम्बेरमाननमहं तमिह स्मरामि ॥ १ ॥

राकाशशाङ्कशतकोटिविजित्वरास्या

भासां पतिं नखरुचैव तिरोदधाना ॥

वीणागुणक्वणनचञ्चलपाणिपद्मा

वाग्देवता सपदि मे हृदि सन्निधत्ताम् ॥ २ ॥

कामेशकल्पपादपमारूढा पुण्ड्रदण्डमवलम्ब्य ॥

काचन कवितालतिका ललिताकृतिरन्तरुल्लसतु ॥ ३ ॥

विद्वद्वृन्दशिरःसु चन्दनरुचो नेत्रेषु मिथ्यादृशां

धूलीमुष्टिकिरो विपक्षवदनस्तम्भाय दम्भोलयः ॥

अस्मन्मानसमानसारगतयो हंसोपमाः पान्तु मां

श्री६गङ्गाधरदेशिकाङ्घ्रिकमलोद्धूताः परागाऽणवः ॥४॥

बुधजनमर्यादायाः कलिबलकलुषीकृतायास्तु ॥

रक्षाकृतेऽवतीर्णं श्रीरामं सद्गुरूत्तमं वन्दे ॥ ५ ॥

वन्दे भारतभूमिनन्दनवनीकाशीपुरीनन्दनान्

वाग्देवीसदनाननान् श्रुतिमतप्रस्थापनैकव्रतान् ॥

सद्विद्याफलदानसौरभयशःशुक्लीकृताशान्तरान्
पूज्यान् पञ्च सुरद्रुमान् नृवपुषो विद्वत्कुलाखण्डलान् ॥६॥

वाग्देवताऽवतारः कवितावनितास्वयंवृतो दयितः ॥
श्रीहर्ष एव साक्षात् गुरुवर**गङ्गाधरो** जयति ॥ ७ ॥

कणभक्षाक्षचरणागम एव वपुर्धरः ॥
**कैलासचन्द्रो** जयति विद्वद्वृन्दशिरोमणिः ॥ ८ ॥

विद्यातपस्तीव्रतेजोनामिताशेषपण्डितः ॥
**दामोदरो** विजयते हरिगम्भीरनिस्वनः ॥ ९ ॥

विद्वत्समाजप्रथमपूजिताङ्घ्रिसरोरुहः ॥
श्रीमान् **शिवकुमाराख्यः** ख्यातो विजयते बुधः ॥ १० ॥

विद्वत्कुलस्यालङ्कारो वैयाकरणधूर्धरः ॥
**तात्याशास्त्री** विजयते रामकृष्णाऽपराभिधः ॥ ११ ॥

अतिमनुजममीषां पावनं कृत्यजातं
स्मृतमपि हृदि नूनं गौरवं द्राग्विधत्ते ॥
प्रथयति निजवाचा तच्च **नारायणाख्यः**
प्रभुवरबुध**गोपीनाथ**लब्धाऽभ्यनुज्ञः ॥ १२ ॥

मद्वाणि ! साहसमिदं मम वीक्ष्य भीता
सङ्कोचमञ्चसि कुतो भव सावधाना ॥
संसारतारणतरिः सकलार्थदात्री
जागर्ति किं न गुरुपादपयोजधूलिः ॥ १३ ॥

इत्थं विधित्सिते नूनं विद्वच्चरितपञ्चके ॥
प्रथमं चरितं ब्रूमः **श्री६गङ्गाधरशास्त्रिणाम्** ॥१४॥



श्रीमन्महामहोपाध्याय श्रीगङ्गाधरशास्त्री मानवल्ली
C. I. E.

जन्मसंवत् १९१०　　　　मृत्युसंवत् १९७०

वाग्देवताऽवतारः कवितावनतास्वयंवृतो दयितः ।
श्रीहर्ष एव साक्षात् गुरुवरगङ्गाधरो जयति ॥

# अथ श्रीगङ्गाधरशास्त्रिचरितम् ।

विन्ध्यस्तम्भनकर्मठेन चुलुकाचान्ताब्धिनाऽलङ्कृता
ऽगस्त्याख्येन महर्षिणा विजयते दिग्दक्षिणा दक्षिणा ॥
'**बंगलोर**' प्रथिताख्यमण्डलगतस्त्रौलिङ्गतुङ्गास्पदं
ग्रामस्तत्र विराजते '**यसरगट्टा**' ख्यो निवासः सताम् ॥१५॥

तत्राऽऽसीदान्ध्रदेश्यः श्रुतिशतविततप्रज्ञयोल्लासितश्री-
गोंत्रे श्रीगौतमर्षेः प्रथितकुलभवो ग्रामणीर्ब्राह्मणानाम् ॥
**सुब्रह्मण्या**ख्यभूमीसुरवरतनयः सन्नयस्फीतकीर्तिः
ख्यातः श्री**मानवल्ली**त्युपपदकलितः **श्रीनृसिंहाख्यशास्त्री** ॥१६॥

सच शैशवएव दैवदुर्विपाकेन कीनाशनाशितजनकजननीकोऽसहाय एव स्वजन्मग्रामं परित्यज्य **बङ्गलोर** नगरे निजमातुलमेव शरणीचकार । तत्रैव स्वपूर्वजपरम्परागतां कृष्णयजुर्वेदापस्तम्बशाखां साङ्गोपाङ्गां सम्यगधीत्य सम्पाद्य च साहित्येऽपि प्रगाढां व्युत्पत्तिं न्यायवेदान्तादिदर्शनान्तराधिजिगमिषाकृष्टचेता अष्टादशहायनावस्थ एव पादचारेणैव त्रिभुवनललामभूतां विद्वत्कुलप्रसवभूमिं वाराणसीमाससाद ।

या च,

शम्भोः कैलासवासप्रणयमपहरन्त्युच्चकैर्हैमधाम-
प्रोल्लासिन्युच्चनीचव्यतिकररहिता साम्यभावं वहन्ती ॥
अद्रेः कन्यां बुभुक्षाक्षपणपटुतरामन्नपूर्णाऽभिधाना-
मार्त्तत्राणे नियुङ्क्ते सुतमपि गणपं दण्डधारं विधत्ते ॥१७॥

यस्यां च,

यद्वासोल्लासितान्तःस्फुरितपरचिदास्वाददिव्येक्षणानां
लोकानां नाकलोकः कथमपि लभते मानसे नाऽवकाशम् ॥
विश्वेशद्वाःस्थभूताकृतिकृतकुतुकस्मेरदेवेन्द्रकर्णा-
कर्षी कश्चित् पिशाचोऽप्यहह मघवता शश्वदभ्यर्थ्यतेऽत्र ॥१८॥

या च,

गङ्गास्रोतोदुकूला चरणतललुठन्मुक्तमुक्तेतराङ्घ्रिः
शम्भोः शूलाग्रसंस्था त्रिभुवनभवनारम्भणस्तम्भमुद्रा ॥
निद्राणे तीर्थवृन्दे कलिबलकलितोच्छूनमोहप्ररोहै-
रेका जागर्ति सेयं सकलकलुषिणां तारणाय प्रवीणा ॥ १९ ॥

इत्थंविधां धीराधिषणाधिक्कृतधिषणधिषणाऽभिमानमानोन्नत विपश्चिदपश्चिमचमत्कृतां काशिकां समासाद्य तत्तद्दर्शनाचार्येभ्यस्तानि तानि साङ्ख्यवेदान्तादिदर्शनानि पुराभवोपगतानीव सद्यः सम्पाद्य तदानीन्तनपण्डितमण्डले महतीं प्रतिष्ठां साहित्ये चाऽद्वितीयत्वमधिजगामाऽसौ धरामण्डलचतुराननो **नृसिंहशास्त्रिवर्यः** ।

अथाऽधिगतविद्योऽसौ गृहस्थाश्रमं सर्वोपकारक्षममाकलय्य पितॄणामानृण्यकामो दारपरिग्रहं विदधे । तात्कालिकाः सुगृहीतनामधेया महामहिमशालिनः **श्रीमदीश्वरीप्रसादसिंह**शर्माणः काशिकाधीश्वराः शास्त्रिवर्यस्य पाण्डित्यप्रकर्षमालोक्य भृशं परितुष्टाः वृत्तिदानपुरःसरं स्वसभाप्रधानपण्डितपदे तं न्ययुञ्जन् ।

गङ्गेव सागरसमागमराजमाना
चैतन्यशक्तिरिव शङ्करमाश्रयन्ती ॥

वाग्देवतेव चतुरास्यसभासमिद्धा
सा काशिकापतिसभा तमवाप्य रेजे ॥ २० ॥

काशीशोऽपि कवीन्द्रमेनमुचितैः सम्भावनैस्तोषयन्
अस्मिन् हार्दसुहृत्समाजसदृशीं वृत्तिं व्यधात्सादरम् ॥
विप्रोऽप्येष कुटुम्बपालनविधौ पर्याप्तमर्थं ततो
गृह्णन्नभ्यधिकं ददानमपि तं नैवानुमेने क्वचित् ॥ २१ ॥

इत्थं काशिकसत्कवीन्द्रमुकुटीमाणिक्यपूगायितः
शिष्याऽध्यापनदेवताऽर्चनजपैः कालं सुखं यापयन् ॥
अक्लेशाऽधिगतार्थसाधितनिजव्यापारतुष्टः परा-
ऽपेक्षावर्जनदुर्जयो द्विजवरश्चक्रे द्वितीयाश्रमम् ॥ २२ ॥

अत्रान्तरे हिन्दीकोविदकुमुदकुलराकाशशाङ्कसङ्काशात् काशीशाद-धिगतादेशोऽसौ सविशेषशेमुषीप्रकाशितचतुराशाऽवकाशः शास्त्रिवर्यो ज-ग्रन्थ "**साहित्य सागरं**" नामाऽष्टादशसहस्रपरिमाणं कलितगरिमाणं अपुराणं हिन्दीगिरा ग्रन्थरत्नम् । स्वेच्छया च गैर्वाण्यां "**काव्यात्म-संशोधनं**, स्कन्दपुराणान्तर्गत**शिवभक्तिविलासटीकां**" चेति ग्रन्थद्वयम् ।

दृष्ट्वैतद्ग्रन्थरत्नप्रणयनपटुतां शिष्टलोके विशिष्टा-
मक्लिष्टस्पष्टदुष्टेतरपदघटनामिष्टमिष्टार्थवृष्टिम् ॥
काशीशः पूरिताशप्रगुणबुधसदोव्योमहंसः सभायां
विद्वन्मान्यं तमेनं बहुविधनुतिभिर्मानयामास सद्यः ॥ २३ ॥

इत्थं सर्वतः श्लाघ्यमानगुणगणः शास्त्रिवरश्चिराराधितविश्वे-श्वरानुग्रहान्निजकुलकमलविकासनभास्करं पचेलिममिव निजपूर्वजपुण्य-

पुञ्जं कलिबलकलुषितसनातनश्रौतमार्गपुनरुद्धाराय भूयोऽवतीर्णमिव शङ्करार्यं प्रथमपुत्रं व्योमेन्दुनिधिचन्द्रसंमिते १९१० वैक्रमेऽब्दे ज्येष्ठशुक्लदशम्यां श्रीगङ्गादशहराशुभपर्वणि समाससाद ।

तदानीम्, आशाः काशप्रकाशाः सुरभिसुमततिस्पर्शिनो गन्धवाहा
हर्षोत्कर्षात्समन्तान्मधुररुतभृतः सञ्चुकूजुर्विहङ्गाः ॥
गोत्रे स्वीये पवित्रे समुदितमनघं पुत्रमेनं विलोक्य
ग्रावात्माऽपि प्रमोदात् पुलकचितवपुर्नेत्रपादो ननर्त ॥ २४ ॥

ततो यथावद्विधिविद्वरिष्ठः पिता चकारात्मजजातकर्म ॥
बालोऽपि संस्कारमवाप्य सद्यो विदिद्युते वन्हिरिव प्रदीप्तः ॥२५॥

ततो जन्मोत्सवादेकादशेऽहनि महनीयकीर्तिर्नृसिंहशास्त्री स्वाभिऽजनप्रथानुरोधेन शिशोः "**सुब्रह्मण्य**" इति नामकरणं विधाय मौहूर्तिकादिश्यमानशुभोदग्रग्रहप्रभावभाविविपश्चिच्चक्रवर्त्तितां च निशम्य शिशोः परमानन्दतुन्दिलः स्वात्मानं विश्वेश्वरानुगृहीतं निर्धार्य भक्तिप्रह्वचेताः शतशः प्रणनाम भगवन्तं विश्वनाथम् ।

गङ्गादशहरापर्वणि लब्धजन्मानमेनं गृहीतावतारामिव गङ्गाधरं मन्यमाना वत्सलाऽस्य मातामही "**गङ्गाधर**" इत्याख्ययैवाऽऽजुहाव । तदेव चाऽस्य नाम नामिताशेषविद्वद्धाम सम्मानसम्पादनं निखिलभूमण्डलप्रथितं बभूव ।

शिशुरयमुदितश्रीश्चापलैर्बालयोग्यै-
रदित मुदमुदारां बन्धुवर्गाय नूनम् ॥
सहजमधुरभावा धीप्ररोहास्तदीया
बुधसदसि शशंसुस्तस्य लोकाऽतिगत्वम् ॥ २६ ॥

दुर्दैवात्तस्य जननी मानिनी तं त्रिहायनम् ।
विसृज्य दुग्धमुग्धास्यं सतीलोकमुपागमत् ॥ २७ ॥

ततो दयिताविरहविधुरोऽपि **नृसिंहशास्त्री** वात्सल्यातिरेकात् गुणवतो ऽस्य शिशोर्मातृभावं पितृभावं चाऽवलम्ब्य स्वयमेव पालनाय तत्परोऽभवत् ।

अथ क्रमेण सम्पादितचौलमङ्गलं निसर्गचपलं बालं स्वयमेव बहुविधा लिपीर्ग्राहयित्वा कोशकाव्याद्यभ्यासमपि शनैः शनैः कारयितुं प्रयतते स्म शास्त्रिवर्यः ।

बाल्येऽप्यस्य विलोक्य विज्ञजनताकल्पामनल्पां धियं
विस्मेरस्तु पदे पदे समभवत्ताचो मतो धीमताम् ॥
पश्चाब्दोऽपि स कण्ठपीठविलुठत्कोशः सुधार्द्रस्वरः
श्रोतॄणां हृदयं हरन्नहरहो **गङ्गाधरो** दिद्युते ॥ २८ ॥

इत्थं सम्पादितकोशकौशलं शिशुं क्रमेण काव्येऽपि लब्धप्रवेशं लोकातिगशेमुषीविशेषं पश्यन् भृशं प्रमोदमानमानसो गुरुरष्टमे हायने विधिवदुपनीतवान् ।

ग्राहयामास च तदानीमेव सरहस्यां भगवतीं सावित्रीं चित्कलां च बीजनिक्षेपात् शिशवेऽपि जननान्तरशोभनसंस्कारपूरोत्तरान्तरायाऽधिकारिणेऽस्मै सहर्षम् ।

स च,

लब्ध्वा तद्ब्रह्मवर्चो ज्वलदिव पुटितं चित्कलासङ्गलक्ष्म्या
तातादृ भूमीविरिञ्चेर्गलितमलिनिमा शुद्धबुद्धिः स सद्यः ॥

मेधोत्कर्षात् प्रसिद्धोऽप्युदितविधिविधाकौतुकी विप्रबाल–
श्चक्रेऽथो मञ्जु मेधाजननमिति मतं ब्रह्मचारिव्रतं तत् ॥ २९ ॥

अथैष ब्रह्मचारिव्रतमनुतिष्ठन् उभयोरपि सन्ध्ययोर्यथाविधि हुताऽग्निकोऽग्निकल्पोऽल्पवया अपि मेधाविशेषात् प्रवयसोऽपि विदुषोऽतिशयान स्तातेन तात्कालिककाशिकवैदिकमूर्धन्यानां श्रीमतां **बालकृष्णभट्टानां** पाठशालायां प्रवेशितोऽध्याप्यत च गुरुणा याजुषीमापस्तम्बशाखां तदङ्गानि च ।

गुरुवरवदनाब्जाच्छुश्रुवानेकवारं
सपदि हृदि विधायाऽऽयासहीनं स धीमान् ॥
कृतगुरुपरिचर्योऽशेषवेदाऽमृताऽब्धे-
रधिगतपरपारो वेदविन्मानितोऽभूत् ॥ ३० ॥

इत्थमाषोडशवत्सरं वेदान्, वेदाङ्गानि, श्रौतस्मार्तकर्मकाण्डानि, काव्यसाहित्यशास्त्रं च करतलामलकमिव कलयित्वा सत्पात्रनिःक्षेपनिराकुलचेतसो गुरोः प्रमोदं मेदुरयन् शशीव धवले दले प्रतिदिवसं विशेषान् पुष्णन् ववृधे ।

अथ पितुरादेशेन तात्कालिककाशिकराजकीयपाठालयप्रधानाध्यापकं पाणिनीयतन्त्रोज्जीवनाय भूयो गृहीतावतारमिव भगवन्तं पतञ्जलिं द्वादशदर्शनीपारीणमखिलभूतलभूषणं योगानुष्ठानप्रतिष्ठितात्मानं विद्वज्जनाऽसुलभशारीरबलभरविस्मारितभीमसेनभुजाबलविभ्रमं स्तनन्धयमिव निर्व्याजसुन्दरस्वान्तं **श्रीराजारामशास्त्रिण**मन्तेवासिभावेनाससादैष भविष्णुर्विपश्चिदपश्चिमचक्रवर्त्ती ।

ततश्च,

राजारामगुरोर्धरासुरगुरोर्लब्ध्वा परिष्कारवत्

कृत्स्नं व्याकरणं स्मृतीर्बहुविधाः सत्सम्प्रदायाऽन्विताः ॥

योगं योगविदां वरादनुपमं व्यासोक्तिमर्माण्यसौ

गाहं गाहमगाहताऽऽगममहाऽकूपारपारं परम् ॥ ३१ ॥

अनेकविबुधाऽर्चितः कविनिषेविताङ्घ्रिः पुन-

र्गुरुप्रणयिमानसोऽधिगतसत्यधामोज्ज्वलः ।

सभासु चतुराननः सततभारतीभासुरो-

ऽप्यसौ न विधिरद्भुतं भुवि विभाति **गङ्गाधरः** ॥ ३२ ॥

गुरुवरबुधराजारामशास्त्रिप्रसादा-

कलितसकलविद्याद्योतमानः सभासु ॥

कविवरनिजतातप्राप्तसाहित्यसम्पत्-

समधिकरुचिरेष प्रौढिमालम्बते स्म ॥ ३३ ॥

प्रवयसि गुरुवर्ये त्यक्तसंसारबन्धे

परिधृतयतिवेषे स्वर्णदीतीरवासे ॥

द्विगुणनिधिशशाङ्कैरङ्किते वैक्रमेऽब्दे

गतवति शिवभावं भूरितापं स आपत् ॥ ३४ ॥

यैर्वात्सल्यपयोधिभिर्निरुपमैः स्नेहैरसौ वर्द्धितः

शश्वत्पाठनजाऽनुभूतिमहितां विद्यां मुदा ग्राहितः ॥

आत्मीयेष्वपि गोपनीयमतुलं योगं च सङ्क्रामित-

स्तद्विच्छेदमधीरधीरतिशुचा सोढुं स नैवाऽशकत् ॥ ३५ ॥

अथैष प्रयत्नसंस्तम्भितशोकाऽऽवेगः धीरगभीरवाचा जनकेनाऽपि

सुचिरं सान्त्वितः प्रकृतिस्थो भूत्वा निर्जरभावापन्नांस्तानेव गुरुचरणान् सर्वदा मनसि संस्मरन् वात्सल्यपयोधीनां तेषामनुग्रहादवसरेऽवसरे स्वप्नेषु तेषां दर्शनं लभमानः तावतैव सञ्जातहर्षः कतिचिन्मासान्निनाय ।

अत्रान्तरे तातेन कृतोद्वाहमङ्गलः सह सहधर्मचारिण्या गृहस्थाश्रमं कर्तुं प्रावर्त्तत ।

अथ द्वितीयमाश्रममधितिष्ठतोऽप्यस्य शब्दखण्डाद्यवशिष्टाऽधिजिगमिषा बलवती मनसि प्रादुर्भूता, तया च प्रेर्यमाणोऽयं पुमवतारमिव वाग्देवतायाः अशेषदर्शनविमर्शनविशदकीर्ति तात्कालिककाशिकपण्डितमण्डलप्रमुखं **श्रीरानडोपाख्यबालशास्त्रिणं** द्वितीयगुरुभावेनाऽऽससाद । यश्च,

तर्के ऽतर्क्यप्रभावः कुशलमतिरलं पाणिनिः शब्दशास्त्रे
मीमांसाप्राणदाता कपिलवरगिरामेक एव प्रवक्ता ॥
योगे वेदान्तशास्त्रे ऽप्यतिनिशितमतिः काव्यसाहित्यशास्त्रे
तन्त्रे ऽन्यत्राऽपि नित्यं प्रचुरतरगतिः सर्वविद्येश्वरो यः॥३६॥

यस्मिन् परिष्कुर्वति पण्डितेन्द्रे
सभासु विद्वन्महितासु नित्यम् ॥
नवीनमेघस्तनिते ऽप्यनास्था
श्रोतुर्जनस्याभ्युदियाय चित्ते ॥ ३७ ॥

यस्मिन् राजति यद्यशःशशिसुधाऽनास्वादि नासीत्पुरं
किञ्चित्कुत्रचिदीदृशो न नृपतिर्यो नाऽस्य नम्रः पुरः ॥

विद्वांसो न गुणैरमुष्य किल ये मूर्धानमाधुन्वते

नाऽभूवन् , न च सा सभा, प्रथमतां यत्रैष नैवर्छति ॥३८॥

आसीच्छैशवएव यस्य विदुषां वृन्दे यशो निस्तुलं

ख्यातो "**बालसरस्वती**" त्यभिधया यो दुग्धमुग्धाननः ॥

अग्निष्टोममुखैर्मखैर्दिविषदः सन्तर्पिताः सादरं

येनाऽस्थाप्यधिकाशि दिव्यमहसा श्रीविश्वनाथेश्वरः ॥३९॥

प्रालेयाचलमौलिलालितवपुर्मण्डीपुराऽऽखण्डलो

यच्छिष्यत्वमुपेत्य धन्यजनतामान्यत्वमासादयत् ॥

भक्त्या नम्रशिरा यदीयचरणौ मौलिस्थलीमौक्तिकै-

र्नित्यं पूजयति स्म पुष्पनिकरैर्हर्षाश्रुसिक्तैरिव ॥ ४० ॥

दिग्दन्तीन्द्रनिभैरभीतिमहितैः शास्त्रेषु पारङ्गमै-

र्वादिव्रातभयङ्करैरगणितैः शिष्यैर्यदीयैरिदम् ॥

व्याप्तं भारतवर्षमुद्गतशशिस्पर्द्धानिबद्धादरां

कीर्तिं यस्य बिभर्ति मूर्धनि सदा श्वेतातपत्रायिताम् ॥ ४१ ॥

तथाविधस्य वसुमतीगीष्पतेः श्रीमतो **बालशास्त्रिणः** सविधे सविधि समधीतावशिष्टविद्यः सद्यः समुपजातसन्तोषात्तस्मादधिगताशीर्वचनः तदुपान्तनिरन्तरासेवनसदुपदेशश्रवणतदङ्घ्रिपरिचरणानि कारं कारं वारं वारंमुदारमनस्तोषः कालमनैषीत ॥

महीसुरगुरुस्ततो विततकीर्तिराशिर्बुध-

प्रधानपदभृत्तमः प्रथित**बालशास्त्री**श्वरः ॥

दिगन्तगतकीर्तिषु स्वकसुशिष्यवर्गेष्वपि

स्फुरत्सु निजधुर्यतामयमियेष **गङ्गाधरे** ॥ ४४ ॥

शास्त्रिवरोऽपि निरन्तरपरिचरणपरितुष्टात् गुरुवरात् शास्त्ररहस्यमर्मग्रन्थ्युन्मोचनप्रकारान् श्रावं श्रावं तदीयपाण्डित्यप्रकर्षविलोकनविस्मितान्तरः एतदीयहंसोपमधिषणाविभवचमत्कृतश्च गुरुवर इत्यन्योन्यं मनसि श्लाघमानौ तौ गुरुशिष्यौ न कस्य सहृदयस्य मनसो मोदं विदधातेतमाम् ।

द्रोणाचार्यपुरस्तादर्जुन इव चापवेदनिष्णातः ॥
श्रीबालशास्त्रिपुरतो रेजे गङ्गाधरस्तादृक् ॥ ४७ ॥

इत्थं वसुधासुधाशनगुरोर्गृहीतावतारस्येव परमेष्ठिनः श्रीमतो **बालशास्त्रिणः** सकाशादासादिताखिलविद्यारहस्यः प्रीतात्मना च गुरुणा ऽधीतानधीतग्रन्थाध्यापनसमर्थः प्रकृष्टपाण्डित्योऽयं ममैवाऽपरा मूर्तिरिति स्वजने परजने च निष्पक्षपातमुद्घोषितयशा धर्मशास्त्रव्यवस्थापत्रनिर्माणादीनि गुरुचरणकार्याणि तदादेशेन कुर्वाणः पारेशतं विद्यार्थिनो विविधानि शास्त्राणि पाठयन् विद्वत्सभासु सर्वतः सादरं समाहूतो वादजल्पवितण्डापण्डितानपरिमितान् वादिपण्डितान् सरलमधुरयुक्त्युपन्यासेन वाचंयमान् विदधानः सुखमवात्सीत् ।

अत्रान्तरे निजगुरूणामपि परमगुरूणां शिवभावमुपेयुषां **श्रीराजारामशास्त्रिणां** जीवनवृत्तं गद्यपद्यमय्या वाचा विरच्य काशीविद्यासुधानिधिनामके पत्रे प्रकाशयामास । यच्च,

तत्सूक्तिकल्पलतिकाकुसुमं नवीन-
मामोदमाद्यदलिपुञ्जनिपीयमानम् ॥
विस्माययत्यपि निपीतसुधान् बुधेन्द्रान्
कान्ताधरे ऽपि कुरुते किल बद्धवैरान् ॥ ४४ ॥

प्रतिपदरससिक्ताः किञ्च मोचाऽभिरामाः
ध्वनिगुणपरिणामाकृष्टसूरीन्द्रकर्णाः ॥
अभिनवमधुधाराधौतरीतिप्रपञ्चाः
शशिरुचिसहभावा यत्र वाचो लसन्ति ॥ ४५ ॥

अथ श्रीमत्या प्रबलप्रतापमार्तण्डनिवारितविमतान्धकारभारया सुकृततत्येव मूर्तिमत्या गृहीतावतारया भारतवर्षीयपुण्यभुवा श्रीमत्या **विजयिनी**(Victoria)**देव्या** अश्वाश्ववसुचन्द्र १८७७ मिते ख्रीस्ताब्दे भारतवर्षसाम्राज्यभारे स्वयं गृहीते सति आसीत्तदानीं सर्वदेशव्यापी महानुत्सवः ।

अन्तः कलहैर्बहुलैरुद्विग्नानां हृदन्तरोच्छ्वासाः ॥
अभ्रंलिहाः पताकाकारा यस्मिन् व्यराजन्त ॥ ४६ ॥
आसीत्स्वादतमोदता प्रतिगृहं माङ्गल्यवाद्योत्तरं
हर्षोच्छूनजनैः कृतः कलकलो व्यापद्दिशामन्तरम् ॥
सम्राज्ञीप्रबलप्रतापकलिताश्वासा जना निर्भयाः
स्वे स्वे कर्मणि सादराः प्रमुदिता आसन् समस्ता अपि ॥४७॥

अस्मिन्नेवावसरे काशीस्थेन सम्प्रति परलोकवासिना विख्यातयशसा विद्वज्जनगोष्ठीमहितेन रायबहादुरपदोपपदेन **श्रीप्रमदादासमित्रमहाशयेन** सम्मेलितायां महाजनसभायामासीदेकः प्रस्तावो "यदमुष्य महोत्सवस्य स्मारकतया महाभारतमनुस्मृत्यादिधर्मग्रन्थावलम्बेन सर्वसाधारणधर्मबोधक एको धर्मग्रन्थो निर्मातव्य" इति । तदनुरोधेन सर्वैः सभ्यैर्विद्वद्भिश्चायं कार्यभारः तत्सभासभ्यान्यतमेषु लोकोत्तरप्रतिभाशालिषु प्रगाढपाण्डित्येषु धर्मशास्त्रतरणिकर्णधारेषु श्रीद

गङ्गाधरशास्त्रिवरेष्वेव साग्रहं सादरं सबहुमानं च समर्पितः । शास्त्रिणोऽपि सर्वजनानुरोधमनुल्लङ्घनीयं मन्यमानास्तं भारमलघुमपि निजबुद्धिविभवेन लघुमिव मन्यमाना अल्पीयसैव कालेन तथाविधग्रन्थावलम्बेन **"शाश्वतधर्मदीपिका"** इतिनामकरणपूर्वकं ग्रन्थं निर्माय पण्डितपत्रे मुद्रितवन्तः । योऽद्याऽपि पृथङ्मुद्रित उपलभ्यते ।

श्रीमन्महाभारतवीचिमालीनिर्मन्थनोत्पन्नसुधावपुष्मान् ॥
मन्वादिवागिन्दुरसानुविद्धप्राणो बुधप्रीणनकर्मठो यः ॥ ४८ ॥

एकोऽपि कण्ठे कलितः सलीलं
विचक्षणानां मुदमादधाति ॥
विलासिनीवक्षसि मौक्तिकस्र-
गेकाऽपि हैमान् जयतीह हारान् ॥ ४९ ॥

इत्थंविधग्रन्थविधानजन्यं
यशो बभूवाऽस्य बुधेन्द्रमान्यम् ।
नैतद्विचित्रं द्युतिशालि रत्नं
ध्रुवं समागच्छति काञ्चनेन ॥ ५० ॥

ततः परं अङ्काश्ववसुचन्द्रमिते १८७९ खीस्ताब्दे काशिकराजकीयपाठालयप्रधानाध्यक्षै र्विद्वद्वरैर्गुणिजनसमादरप्राथितकीर्तिभिर्डाक्टरथिबोसाहिबमहाशयैः सबहुमानमाहूताः शास्त्रिवरास्तस्यां पाठशालायां साहित्यदर्शनप्रधानाध्यापकपदमलमकुर्वन् । तदानीं सा राजकीयपाठशालात्मिका सुरभारती,

वादिव्रातविजित्वराऽलघुवचःपूरै र्बुधेन्द्रै र्नवै-
रत्नैरञ्चितहारसञ्चितरुचिर्मध्यं विना दुर्मनाः ॥

आसाद्याऽमुमुदित्वरद्युतिमिलन्नैकाढ्यवर्णच्छविं
कृत्वा नायकमादरेण शुशुभेऽलङ्कारझाङ्कारिणी ॥५१॥

वीणानिक्कणनं विहाय सरसाः सूक्तीः सुधास्राविणीः
श्रोतुं यस्य सरस्वती रसवती भावात्मना निश्चला ॥
मन्ये गीष्पतिरप्यमुष्य सुमहद्वैदुष्यमालोकय-
न्नेतत्कण्ठगुहाशयो ऽद्य बहुधा निश्चिन्ततां प्राप्तवान् ॥ ५२ ॥

यद्गीर्जन्हुसुतावतारविलसन्नुच्चैःशिराः सर्वतो
व्याप्तः सद्विबुधोत्तमैः सुयशसा स्वच्छां रुचिं धारयन् ॥
सम्राट्स्थापितकाशिकासुरगवीपाठालयो ऽसौ ध्रुवं
कैलासो ऽत्र कृतस्थितिः समुचितं **गङ्गाधरो** राजते ॥५३॥

इत्थं रत्नमिव काञ्चनसमन्वयेन पाठशालानियोगादवाप्तसुस्थितयः शास्त्रिवराः अगणितान् विद्यार्थिनः प्रत्यहं नानाविधानि दर्शनानि पाठयन्तः प्रकृष्टां प्रतिष्ठां लेभिरे ।

[अथ कतिपयैरेवाहोभिर्बम्बईनगरवास्तव्याः विश्वविख्यातवैदुषीवैभवाः सकलदर्शनपारावारपारीणाः त्वरितकवितानिर्माणकर्मठाः शतावधानिनः प्रज्ञाचक्षुषो **भारतमार्तण्ड**इत्यन्वर्थमुपाधिं वहन्तः **श्री गट्टूलालमहोदयाः** समायाताः काशिकां विद्वज्जनावलोकनसस्पृहस्वान्ताः सहाऽपरिमितैः शिष्यवर्गैः ।

दिगन्तविजयिनां तेषां समादराय काशीस्थैर्नागरिकैरत्रत्ये प्रसिद्धे शुद्धाद्वैतसाम्प्रदायिकश्रीगोपालमन्दिरप्राङ्गणे महती महाजनसभा सम्मेलिता । तस्यां काशिकायाश्चिरात्प्रसिद्धतमं गौरवं रिरक्षयिषन्तस्तदा-

नीन्तना महान्तः पण्डिताः वादकण्डूलमुखमण्डलाः शतशः साग्रहं समाजग्मुः । दर्शकाश्चेतरेऽपि सहस्रशः सङ्गताः भारतमार्तण्डानां प्रथितं प्रभावं निशम्य काशिकागौरवं मा भाङ्क्षीत् इति समाकुलचेतसः पण्डितमण्डलीं सादरं सबहुमानं च पश्यन्तः परस्परं मन्दस्वरेण भारतमार्तण्डानङ्गुल्या निर्दिशन्तः कौतूहलिनोऽवतस्थिरे ।

अथ भारतमार्तण्डैरारब्धे निजशतावधानप्रदर्शने सर्वे पण्डिता दर्शकाश्च स्तब्धकर्णास्तदेकदत्तावधाना अभूवन् । विस्मिता च सा समस्ता महती सभा समीक्ष्य तेषां समकालं शतावधानदर्शनचातुरीं प्रशशंस च साधुवादपुरःसरम् ।

अथ प्रवृत्ते विद्वद्विनोदे प्रचालितासु दार्शनिककथासु प्रस्तुते चात्मानात्मविचारे पण्डिपरिषदुपक्षिप्तान् पूर्वपक्षान् सद्यः समुत्तरयति भारतमार्तण्डे भीतविस्मितसमस्तजने समाजे काशिकागौरवरक्षाबद्धकङ्कणाः श्रीमन्तः शास्त्रिचरणाः पुरः समुपसृत्य भारतमार्तण्डान् वादकथायै समाजुहुवुः । उत्थितश्च तदानीं तुमुलः सभ्यानां साधुवादः । द्वित्रियुक्त्युपन्यासैरेव भारतमार्तण्डमकालजलदावृतं विदधिरे धीमतामग्रेसराः शास्त्रिवर्याः । तदनु "यदि मदीयामिमां दुष्पूरां वर्णक्रमानुसारिणीं समस्यां तेनैव क्रमेण सद्यः पूरयिष्यसि तर्हि जितोऽस्मीति" प्रसभं वदति भारतमार्तण्डे 'बाढं, उच्यताम्, एषोऽस्मि गुरुप्रसादात्सर्वदा सन्नद्धो दुष्पूरसमस्यासहस्रमपि सद्यः पूरयितु'मिति सजलजलदगम्भीरया गिरा सहजस्मितमधुरं निगदति शास्त्रिवर्ये सह सभ्यजनप्रशंसावादैर्भारतमार्तण्डमुखात् "बभौ मयूरो लवशेषसिंहः' इति समस्या निरगात् । तच्छ्रवणक्षणएव तेनैव क्रमेण पूर्तिमित्थमचीकरन् शास्त्रिवराः

(१)अनेकवर्णक्रमरीतियुक्तः
कखागघाङ्च्छजझाञटौठः ।
अडण्ढणस्तोऽथ दधौ न पम्फुल्
'बभौ मयूरो लवशेषसिंहः' ।

विस्मितसकलजनाननसहस्रेभ्यः सद्यः सममेवोच्चचार 'साधु साधु जितं जित'मिति प्रशंसावादः । गुणग्राहिलमानसाः सरलहृदः

---

(१) "सपरिकरशिवस्य वाहनेषु कतमो वर्षासु मोदते" इत्येवं पृष्टः कोऽप्युत्तरयति—अनेकेति ।

अथ=निदाघोत्तरम्, अनेकवर्णानां क्रमरीत्या युक्तः=पीतनीलादिविविधवर्णविशिष्टः, कखागघाङ्=कखेन हासेन अनायासेनेति यावत्, अगां कुटिलगामिनां सर्पाणाम्, अघं भक्षणरूपमञ्चति पूजयत्याद्रियत इति तादृशः, अच्छं शोभनं जातो झो(१)भूषणरूपो यस्य सोऽच्छजझः, ञानां(२) विराविणां टं(३)ध्वनिं स्वरवमाधुर्येणोठति प्रतिहन्ति तिरस्करोति यस्तथाभूतः, अडण्ढणो(४)ऽचपलः, लवौ न्यूनौ नानावर्णवत्त्वादिगुणैः शेषसिंहौ यस्मात्तादृक् मयूरो ऽपरपक्षिहंसादिवत्, (५)तः=क्षीणतां खेदमिति यावत्, न दधौ, प्रत्युत पम्फुल् (६)सन् प्रमोदातिशयं भजमानो बभौ ।

---

( १ ) झकारश्च तथा वायौ नेपथ्यं समुदाहृतः ।
( २ ) ञकारो गायने प्रोक्तः ।
( ३ ) टो ध्वनौ च प्रकीर्तितः ।
} त्रिष्वप्येकाक्षरकोशोमानम् ।

( ४ ) डण्ढणश्चपलो मूर्खः इति रत्नदर्पणः ।

( ५ ) उपक्षयार्थकात्तस्यतेर्भावे क्विपि पुंस्त्वाद्यविवक्षाप्रयुक्ते लिङ्गसामान्यरूपे क्लीबत्वे ऽमो लुकि ।

( ६ ) यङ्लुगन्तात्फलतेः कर्तरि क्विपि ॥

पण्डितेन्द्राः भारतमार्तण्डा अपि स्वमुखेनाऽपि भूरिशः शास्त्रिवरान् प्रशशंसुः ।

इत्थं काशिकगौरवावनकृते तेजः प्रकाश्य स्वकं
सम्पाद्य प्रचुरं यशः स्मितमुखे श्रीशास्त्रिवर्ये स्थिते ।
लोकाक्षीणि सरोरुहाणि रभसात्तस्मिन्नहंपूर्विका-
मालम्ब्यैव सुपुष्पवर्षविधया सद्यो निपेतुर्भृशम् ॥ ५४ ॥

सद्यः "साधु जितं जितं शिवपुरी काशी न जेया परै-
र्धन्योऽयं विदुषां वरो यदमुना ऽस्मद्गौरवं रक्षितम्" ।
इत्थं दर्शकपण्डितावलिकृतः कोलाहलो निस्तुलो
दिग्दन्तिश्रवणोदराणि विपुलं भिन्दन् बहिर्निर्गतः ॥ ५५ ॥

उपचितसुयशःश्रीः शास्त्रिवर्यस्तदानीं
प्रमुदितजनचेतःपद्मसद्मा मरालः ॥
विदितविजयवृत्तैस्तातपादैः प्रणम्रः
शिरसि निहितपाणिः सार्थकं जन्म मेने ॥ ५६ ॥

इत्थमनेन भारतमार्तण्डविजयावदानेनाऽऽसेतुशीताचलं प्रतिजनपदं प्रतिग्रामं प्रतिजनं सुप्रतीतप्रथितकीर्तिः शास्त्रिवरो यथापूर्वमध्यापनाध्वरबद्धदीक्षः कालं निनाय ।

अत्रान्तरे दिगन्तविश्रान्तकीर्तयो विद्वद्गोष्ठीगरिष्ठाः कलिकाताराजकीयसंस्कृतपाठशालाप्रधानाध्यक्षाः सुगृहीतनामधेयाः सम्प्रति परलोकवासिनः म० म० **श्रीमहेशचन्द्रन्यायरत्न** C. I. E. महोदयाः काशिकामुपेत्य स्वयमेव शास्त्रिवरगृहं गतास्तदीये कलकत्ताविद्यालये

विपुलवेतनवृत्तिदानपुरःसरं अध्यापकपदग्रहणाय साग्रहं सहस्रशो ऽन्वरुन्धन् ।

शास्त्रिवरा अपि सविनयं तदनुरोधं प्रत्यादिशन्तः जीवननिर्वाहौ-पयिकीं वृत्तिमिहैव लभमानस्य काशीपरित्यागं प्रत्यवायपक्षीयं निर्दि-शन्तः पितृचरणाज्ञामेव तत्र मुख्यं कारणं निरदीदिशन् ।

चत्वारिंशन्मुद्रिकामात्रवृत्तिः काले तस्मिन् शास्त्रिवर्यः कुटुम्बी ।
काशीवासैकाग्रहस्त्यक्तवांस्तां वृत्तिं चान्यामर्धसाहस्रमुद्राम् ॥ ५७ ॥

दृष्ट्वा तत्तनयस्य वाह्यजनतानिन्दास्पदं साहसं
धीराणां निजधर्मतत्त्वविदुषामेकान्तमाह्लादनम् ।
सुप्रीतो जनको निरीक्ष्य दृढतां यूनोऽपि धर्मे स्वके
बाढं हर्षजवाष्पबिन्दुभिरलं भूयोऽभ्यषिञ्चत्सुतम् ॥ ५८ ॥

दुर्दैवादथ भारतस्य विदुषामेको गुरुर्नन्दव-
न्ह्यङ्कक्ष्मामितवत्सरे परपदं **श्रीबालशास्त्री** गतः ।
तच्छोकाकुलचेतसो ऽस्य विदुषो गुर्वाज्ञया तद्धुरां
वोढुः शोकमवारयद्बहुतरा कर्तव्यसूची पुरः ॥ ५९ ॥

अथैष पूर्वगुरोरिव द्वितीयगुरो**र्बालशास्त्रिणोऽपि** जीवनच-रितं गद्यपद्यमय्या गिरा निर्माय काशीपण्डितपत्रे सादरं प्रकाशयामास ।

यच्च,

परिणतकविवाचामेकमादर्शरूपं
गुरुवरपदभक्तिप्रोतभावप्रकर्षम् ।
परभृतरुतरीतिव्यञ्जनं क्षीरसारा-
मलतरपदबन्धं सर्वतः सुप्रसन्नम् ॥ ६० ॥

यत्र क्वापि पुरातनेष्वपि कविष्वालोक्यते जातुचित्
श्रौतस्याऽपि च कर्मणः कविगिरा चेतोहरं वर्णनम् ।
तच्छ्रीमद्बुधबालशास्त्रिचरिते यच्छास्त्रिवर्यैः कृतं
दर्शं दर्शममन्दमादरयुतं मोदं बुधा लेभिरे ॥ ६१ ॥

अनन्तरं सहैव पाठशालीयकार्येण तात्कालिकाध्यक्ष डॉ॰ थिबो-साहिबमहाशयानुरोधेन पदमञ्जरी, रसगङ्गाधर, वाक्यपदीय, तन्त्र-वार्त्तिकादिग्रन्थान् टिप्पणादिभिः पुरस्कृत्य पण्डितपत्रे प्रकाशयामास ।

अथ सप्ताष्टवसुचन्द्रमिते १८८७ खीस्ताब्दे भारतेश्वर्याः प्रथ-मजुबिलीमहोत्सवे सबहुमानं साम्राज्ञीप्रदत्तं 'महामहोपाध्याय' इति परप्रतिष्ठास्पदं विरुदं लब्धवान् शास्त्रिमहोदयः ।

यल्लब्धुं शतशो बुधाः प्रतिदिनं कुर्वन्ति यत्नान् बहून्
केचित्तेषु कथञ्चिदेव सुकृतैर्विन्दन्ति तद्वार्धके ॥
लब्धं तत्खलु पञ्चविंशतिमिताऽब्देनैव यूनाऽमुना
साकं वार्द्धकदुर्बलैस्त्रिभिरतिप्रख्यैः पुराणैर्बुधैः ॥ ६२ ॥
नूनं सा पदवी समेत्य सुधियामीशं युवानं बुधं
सार्थक्यं समुपाजगाम जनुषो नूत्नावतारा तदा ॥
प्रागेव प्रतिभाविशेषजनितं ख्यातं तदीयं यशः
सम्प्रत्यञ्चितमञ्जिमाऽमरगुरोः कर्णान्तरं गाहते ॥ ६३ ॥
काशीश्वरः प्रभुपदोपपदो वदान्यो
नारायणो गुणिगुणादरसुप्रवीणः ॥
गङ्गाधरं बुधवरं सममानयद् द्राक्
हेमाङ्कराङ्कवमहावसनार्पणेन ॥ ६४ ॥

अथ सौभाग्यात्सुरभारत्याः श्रीमति महामहिमनि **डॉ. ए. वेनिस** C.I. E. महोदये काशिकराजकीयपाठालयप्रधानाध्यक्षधुरां वहति सति अभिनवप्रवर्त्तितायां विजयनगरसंस्कृतग्रन्थमालायां अध्यक्षानुरोधेन सिद्धान्तलेश, न्यायमञ्जरी, न्यायभाष्यादीन् टिप्पणादिभिः पुरस्कृत्य सुसम्पादितवान् शास्त्रिमहोदयः ।

**डॉ. थिबो साहिब** महाशयाश्च श्रीरामानुजीयश्रीभाष्यानुवादावसरे प्रायो विषमस्थलेषु शास्त्रिवरसाहाय्यमवसरेऽवसरे समधिगम्य समापितवन्तः स्वकार्यम् ।

**डॉ. वेनिस** महोदयास्तु बुद्धिप्रकर्षं वैदुषीं च सविशेषं निरीक्ष्य लब्धाऽवसरा अन्तरान्तरा शास्त्रिवरमुखारविन्दविगलदमृतास्वादसुभगोपदेशरसमास्वाद्य च शास्त्रिपादेषु श्रद्धातिशयमपुष्णन्। स च सत्पुरुषसंसर्गसंस्कारो **डॉ. वेनिस** महोदयस्य दृशं विशदय्य आर्यशास्त्राणां गौरवं चाऽप्यवगमय्य धियमस्य भारतीयदिशैव प्रवर्तयामास ।

शास्त्रसंस्कृतचेता **डॉ० वेनिस** महोदयोऽपि शास्त्रिवराणामुपकारान् यावज्जीवं स्मरन् श्रद्धावशात् सर्वदैव **'गुरुजी'** इति पदेनैव तन्नाम स्मरन्नासीत् । किं बहुना, प्रयागविश्वविद्यालये न्यायवैशेषिकदर्शनाविषयके स्वकीयप्रथमव्याख्याने श्रीशास्त्रिवरप्रसादादेव स्वस्य योग्यतामुल्लिख्य **'प्रीयन्ताम् गुरवः'** इति वाक्येन तत्राऽपि शास्त्रिपादान् सादरं सस्मार **डॉ० वेनिसमहोदयः** ।

शास्त्रिवरं डॉ. वेनिसमहोदययोरव्याजं मिथः सौहार्दं समीक्ष्य—

किं प्राची बलशालिनीमपि बहिर्दृष्टिं प्रतीचीं सखीं
वाग्भिश्चोरुपदोदयाभिरसकृत्संस्थापयन्ती स्थितौ ।

भावान् सत्त्वमयान् तदीयहृदये कृत्वा स्थिरान्सादरं
गङ्गेवात्मसमानतामभिमतां सम्पादयत्यद्भुतम् ॥ ६५ ॥

इति प्रेक्षकाणां वितर्काः समुदपद्यन्त ।

अथ व्योमाङ्कवसुचन्द्र १७९० मिते ख्रीस्ताब्दे काश्यामसीघट्टे जलनलयन्त्रिकाकार्यसौकर्याय तन्निकटवर्त्तिप्रथिततम**श्रीगोस्वामितुलसीदास**प्रतिष्ठापितश्रीसीताराममन्दिरस्थदेवमूर्तीस्ततोऽपसार्याऽन्यत्र नवनिर्मितमन्दिरे प्रतिष्ठापयितुं कृतनिश्चयेऽधिकारिवर्गे वार्त्तया ऽनया सर्वतः संक्षुब्धे महाजनसमाजे धूर्तवञ्चकदस्युभिरवसरमिमं स्वार्थसाधनानुकूलं कलयित्वा समारब्धे प्रकृतिपीडने हन्यमानेषु निरपराधेषु प्रवृत्ते च घोरविप्लवे मण्डलाधीशेन विचारसभायां प्रवर्त्तितायां समाहूताः शास्त्रिवरा शतशः प्रमाणजातैर्देवमूर्तीनां स्थानादपसारणं मन्दिरपातनं च शास्त्रविरुद्धमित्येव प्रत्यपीपदन् । विप्लवशमनस्य सुकरमुपायं च निरदीदिशन् । सहर्षं मण्डलाधीशेन सह सभ्यसमाजैः स्वीकृते शास्त्रिवर्योपदेशे सद्यो निवारितं मन्दिरपातनं मूर्तीनामपसारणं च । शमितश्च विप्लवः शास्त्रिवर्योपदिष्टेनैव वर्त्मना ।

एतेन प्रथितेन पण्डितपतेस्तस्यावदानेन च
प्रीतिः पौरमहीपयोरुदभवच्चिते समाना तदा ।
नाऽयं केवलपण्डितो दृढकृताभ्यासश्च नीतौ पुन-
र्योग्यो भूपतिसान्धिविग्रहिकताव्यापारलीलास्वपि ॥ ६६ ॥

अथ वन्हिबाणाङ्कचन्द्रमिते १९५३ वैक्रमेब्दे काशीनिवासी आहिताग्निः **सदाशिवदीक्षित**नामको ऽकिञ्चनो ब्राह्मणो मनसि बलवदुद्भूतया ज्योतिष्टोमयागचिकीर्षया व्याकुलः स्वस्याऽधनतया

च सुतरां विषण्णोऽपि सर्वतोमुखसाहाय्यसम्पादनपुरःसरं यागभारं शास्त्रिवरेषु साग्रहं न्यस्तवान् ।

शास्त्रिवरा अपि तदानीमल्पवेतनवत्तया स्वयमर्थसाहाय्यं कर्तुमसमर्था अपि तस्य ब्राह्मणस्य पुण्यकर्मणि दृढां निष्ठां, अनेन द्वारेण श्रौतविद्यायाश्चोन्नतिं सम्भाव्य आत्मविश्वासेन साहसप्राये ऽप्यस्मिन् कर्मणि बद्धपरिकरा बभूवुः । ततो यज्ञेश्वरानुग्रहात् प्रचुरपुण्यबलाच्च शास्त्रिवराणां काशिकैर्वैदेशिकैश्च तथाविधं अर्थसाहाय्यमाचरितं यदन्ते बहूनामपि श्रद्धालूनां साहाय्यमनावश्यकतया ऽस्वीकरणीयमासीत् ।

शास्त्रिवरानुध्याने सम्पादितशिक्षाविशेषाणां ऋत्विजां शस्त्रस्तोत्रसामगानानि पश्यन्तो ऽनुष्ठाननैष्ठिकतां प्रत्यवायं विनैव समवसितां च वीक्षमाणाः सर्वे जनाः सर्वतः साधुवादान् गृणन्तः सत्ययुगे वसिष्ठादिप्रवर्तिताध्वरदर्शिन एवात्मनो मन्यमानाः जन्मसाफल्यं लेभिरे ।

> तस्मिन्नध्वरमण्डपे ऋषिनिभा ऋत्विग्वरास्तेजसा
> वैतानाग्निसमा नवीनवसनाः पङ्क्तिक्रमात्संस्थिताः ।
> हस्ते सोमसमिद्धपात्रकलनात्क्षीरोदनिर्मन्थने
> पीयूषद्रवपानसोत्कमनसो देवा इवाऽऽरेजिरे ॥ ६७ ॥

इत्थं शास्त्रिवरैः सुसम्पादितेऽस्मिन्नध्वरे नियुक्तानां ऋत्विजां असाधारणं स्वकर्मकौशलं, अनुष्ठानसौष्ठवं, सुप्रबन्धं च प्रत्यक्षं निरीक्ष्य समुपजातश्रद्धातिरेकाः नेपालराजाश्रिता काशीनिवासिनः सुसम्पन्नाः विद्वद्वरा **आचार्यशिरोमणिशर्माणः** स्वयं सोमपुरःसरमाधानं

त्रेताग्नेश्चिकीर्षन्तस्तत्सुसम्पादनभारं परमादरपुरःसरं शास्त्रिवरेषु विन्यस्य शुभे मुहूर्ते दीक्षामगृह्णन् ।

शास्त्रिवरैः पुरेवाऽयमप्यध्वरः समीचीनतयैव सम्पाद्य समापितः । ततो बाणबाणाङ्कचन्द्रमिते १९५५ वैक्रमेऽब्दे आचार्यशिरोमणिदीक्षित-महाशयाः प्रथमाध्वरस्य सुसम्पादनेन सञ्जातद्विगुणोत्साहाः शास्त्रिव-रानुध्याने अत्यग्निष्टोमं कर्तुं प्रावर्त्तन्त । सुसम्पादिते च तस्मिन्नप्य-ध्वरे ऽधिकाधिकोत्साहाः शास्त्रिवरोपदर्शितेनाध्वना साग्निचित्सर्वपृष्ठा-प्तोर्यामसोमयागं कर्तुं समारभन्त ।

पुरः पश्चादपि बहोः कालादसौ यागो न केनाऽपि कृत आसादिति तत्पद्धतिप्रबन्धविधानानि तात्कालिकानां ऋत्विजामनभ्यस्तचराण्यास-न्निति तत्सुसम्पादनाय नानाविधश्रौतग्रन्थावलोकनविमर्शनादिना भूरि-प्रयासेन कायक्लेशमगणयित्वा सुशिक्षामापादिता ऋत्विजः सम्पादितश्च पूर्वापेक्षयाऽपि सुष्ठुतरमसौ यागः शास्त्रिमहाभागैः ।

तस्मिन्नेवावसरे शास्त्रिवराणां साक्षादनुसन्धाने लब्धशिक्षा ये श्रौतविदस्तादृशेषु कर्मसु निपुणतामवापुस्ते तच्छिष्याश्चेवाद्याऽपि तत्कर्म कर्तुमीशते । सोऽयं शास्त्रिवर्यैरेव पुनः प्रवर्त्तितो लुप्तप्रायः श्रौतगङ्गा-प्रवाहः कालक्रमेण शुष्यन्नपि अद्यावधि कथञ्चित् धृतप्राणोऽस्ति ।

अद्यापि श्रौतविद्या विलसति यदियं काशिकायां कथञ्चित्
तन्नूनं शास्त्रिपादप्रगुणगुणगणोत्पन्नपुण्यप्रभावात् ।
सन्त्येवाद्याऽपि केचित्कृतबहुसुकृता वैदिकास्तेषु यागे-
ष्वश्रान्ताचान्तसोमाः सुरभितमहविर्धूममाघ्राय तृप्ताः ॥ ६० ॥

अथ वन्हिव्योमाङ्कचन्द्रमिते १९०३ खीस्ताब्दे श्रीमतः सम्राजः **सप्तमैडवर्डस्य** मुकुटधारणमहोत्सवे इन्द्रप्रस्थनगरे सम्राट्प्रतिनिधे **लॉर्ड कर्झन** महोदयस्य महत्यां सभायां सबहुमानमाहूता अपि शास्त्रिवराः शरीरदौर्बल्येन हेतुना तत्र गन्तुं नाशक्नुवन्, तथाऽपि तस्मिन्महोत्सवदिने काश्यामेव प्रवर्त्तितायामुत्सवसभायां मण्डलाधीशेन ससम्मानं शास्त्रिपादेभ्यः **सी. आइ. ई.** इति पदवीप्रदानमुद्घोषितम्। चमत्कृतश्च सर्वोऽपि महाजनसमाजः। गुणिजनगुणादरणेन परितुष्टा च सहृदयमण्डली।

बापूदेवबुधात्परं न च पुरा काशीस्थविद्वद्गणे
केनाप्येष बुधेन पूर्वसुकृतैः संमान आसादितः ॥
तं तादृङ्महनीयमानविषयं सम्पाद्य विद्वत्तमाः
श्रीमच्छास्त्रिवरा गुणग्राहिलतां भूपस्य तां मेनिरे ॥ ६९ ॥

परिवर्त्तनैकलक्षणे संसारे सुखदुःखान्यतरसम्पातो हि निसर्गएव। प्राकृतिकं नियममुलङ्घयितुं न कस्यापि शक्तिरस्ति। दशाक्रमेण तस्यैव नियमस्य शास्त्रिवरा अपि लक्ष्यतामन्वभूवन्।

शास्त्रिवराणां ज्येष्ठस्तनयो **ढुण्ढिराजशास्त्री** यः खलु बुद्धिमत्त्वे प्रतिमूर्तिरिव शास्त्रिवराणां, येन च साहित्याचार्यपरीक्षायाः पञ्चसु खण्डेषु सम्यगुत्तीर्य आङ्गलभाषापरीक्षास्वपि सम्यगुत्तीर्णेन विदुषां मनसि भविष्यत्कालीनं किमपि रम्यं चित्रमुदङ्कितमासीत्, स एव वेदव्योमाङ्कमहीमिते १९०४ खीस्ताब्दे सहसा देवभूयं जगाम।

पुत्रे पितुः सदृशता कियतीति पृष्टे
योऽशब्दमुत्तरमभूद्बहुभिः किमुक्तैः ॥

दुर्भाग्यमेव बुधसंसद एतदास्ते
तद्वैदुषीं न चिरकालमसाववाप ॥ ७० ॥

निरन्तरवेदान्तचिन्तनदान्ताशयाः शास्त्रिवरा ईदृशमपि शोकशङ्कुं विवेकसहायेन सद्यो विधूय बलवच्छोकपरितप्ताया दयितायाः सान्त्वनाय राजकीयकार्यान्मासत्रयं गृहीताऽवकाशाः जगदीशरामेश्वरकाञ्चीपुरीप्रभृतितीर्थयात्राभिलाषेण निर्जग्मुः ।

प्रतिनिवृत्य तीर्थयात्रायाः शास्त्रिवरैरेको दार्शनिको ग्रन्थो **ऽलिविलासिसंलाप**नामको निरमायि, यत्र द्वादशदर्शनीगताः सर्वेऽपि विषया अलिविलासिनोः पूर्वोत्तरपक्षविधया निवेशिताः, मध्ये स्वानुभूततत्तत्तीर्थदेवतावर्णनमप्युपनिबद्धम् । किञ्च दार्शनिकपदार्थनिरूपणपरे ऽप्यस्मिन् ग्रन्थे तादृशं कवितासौष्ठवं निबद्धं, यत्ततः पूर्वं परतोऽपि न केनाऽपि कृतं, कर्तुं पारयिष्यते च ।

आजन्मोपनिषद्विचारमहिमस्फूर्तिश्च या ऽलौकिकी
तस्याः स्वात्मनि या च संस्कृतिरभूद्वैराग्यसम्पादिका ।
साहित्यार्णवमन्थनोत्थितसुधापूराऽवगाहश्च य-
स्तत्सर्वं न परोक्षमस्ति विदुषां ग्रन्थे ऽत्र सम्पश्यताम् ॥७१॥

अपरोऽपि **'हंसाष्टक'** नामको निबन्धः शास्त्रिवरैः पूर्वमेव निबद्ध आसीत्, सोऽपि दार्शनिक एव । तत्र हंसपक्ष्यात्मनोः सुश्लिष्टवर्णनविधया प्रायः प्रसिद्धसकलदार्शनिकमतेनात्मस्वरूपं विवेचितम् । सरलतरश्लेषसौन्दर्यविधया साहित्यसौहित्यपराकाष्ठाऽपि प्रदर्शिता । तदुपरि शास्त्रिवराणामनुजैः सकलशास्त्रपारावारपारङ्गमैर्गुरुवरैर्महामहोपाध्यायतैलङ्ग**रामशास्त्रिभि**रतिसमीचीना व्याख्याऽपि

ऽध्यधायि, मुद्रितं चैतद्ग्रन्थद्वयम् ।

अथ प्रयागविश्वविद्यालयकार्यकारिसभायां सदस्यत्वेनाधिकृताः शास्त्रिवरा अनेकवारं एम. ए. परीक्षापरीक्षकत्वेनाऽपि वृताः अङ्कव्योमाङ्कचन्द्रमिते १९०९ खीस्ताब्दे श्रीमन्महामहोपाध्याय**श्रीगङ्गानाथ** झामहोदयस्य डॉक्टरपरीक्षायाः परीक्षका भूत्वा तत्कार्यमपि साधु समपादयन् ।

अथाऽनुपदमेव पाठशालीयकार्यस्यैकत्रिंशद्दिनोत्तरत्रिंशद्वर्षमिते काले ऽवसिते तद्दिनएव **डॉ. वेनिससाहिब** महोदयस्य भूयांसमप्यनुरोधमुल्लङ्घ्य विश्रान्तिकामाः शास्त्रिवराः परित्यक्तवन्तः सर्वमेव राजकीयकार्यभारम् ।

अथ भारापगमलघूकृतशरीरमनःप्राणाः शास्त्रिवरा गङ्गास्नानदेवतार्चनजपवेदान्तचिन्तनादिभिरेव कालं नयन्तः विविक्तैकान्तसेविनः मुनिवृत्तिमेवाऽऽदेहपातं सिषेविरे ।

क्रमेण ज्वरजर्जरेऽपि वपुषि यथाशक्ति नित्यनैमित्तिककर्मलोपं परिहरन्तः सततजागरूकाः प्रतिदिवसमेकमेकमिति क्रमेण काशीखण्डप्रथितसकलदेवतापूजनपूर्वकं तत्तीर्थं ब्राह्मणानीतं गृह्णन्तः क्रमेण सकलदेवतापूजनानि कारयामासुः ।

दानानि महादानानि प्रायश्चित्तानि च धर्मशास्त्रोपदिष्टानि क्रमशः सम्पादयन्तः सर्वदा भगवदनुध्यानपरायणाः शान्तमनसः व्योमाश्वाङ्कशशाङ्कसंमिततमे वैक्रमे वत्सरे ज्येष्ठशुक्लप्रतिपदि प्रातः प्रहरमात्रोच्छ्रिते भगवति भास्वति विमुक्तसमस्तबन्धनाः ब्रह्मचिन्तनमेव केवलं विदधाना योगवर्त्मना जहुरिमां पाञ्चभौतिकीं तनुं श्रीमन्तः पूज्यपा-

दाः **श्रीगङ्गाधरशास्त्रि**सद्गुरुचरणाः ।

व्योमाश्वाङ्कशशाङ्कसंमिततमे संवत्सरे वैक्रमे

ज्येष्ठे मासि दले सिते प्रतिपदि प्रातर्गुरोर्वासरे ॥

अस्माकं रुदतां स्वयं भगवता स्नेहात्करालम्बिताः

**श्रीगङ्गाधरशास्त्रिणो** गुरुवरा जग्मुः पदं शाश्वतम् ॥७२॥

विद्याम्भोधिरशोषि रम्यकविताकल्पद्रुरुन्मूलितो

व्याख्याने पटुता हृता स्मृतिमिता सा वादकण्डूलता ॥

वेदान्तानुभवः स नाऽद्य बहुधा ऽन्विष्याऽपि हा लभ्यते

याते ऽस्तं किल सद्गुरौ स गरिमा नाऽन्यत्र संलक्ष्यते॥७३॥

उद्यत्पार्वणशर्वरीश्वररुचः पीयूषसाराः क्व ता

वाचः कोकिलपञ्चमादचरमा निर्भीकता सा ऽद्भुता ।

तैक्ष्ण्यं तत् क्व धियः क्षणक्षणनवोल्लासा क्व सा शेमुषी

**श्रीगङ्गाधरशास्त्रि**सद्गुरुवरादन्यत्र नालोकिता ॥ ७४ ॥

ग्रन्थग्रन्थिविभेदनेषु पटुता व्याख्यानधाटी च सा

मध्ये हास्यकथाप्रसङ्गकलनात्तच्छिष्यधीशोधनम् ॥

शिष्येष्वात्मजनिर्विशेषमुदयत्स्नेहं च तद्वीक्षणं

सर्वं केवलमेकले गुरुवरे **गङ्गाधरे** वीक्षितम् ॥ ७५ ॥

सा लोकव्यवहारधीरतिशिता सा वस्तुमर्मज्ञता

लोकाकर्षणकर्मठा द्युतिमयी दृष्टिश्च शम्पानिभा ॥

काये सा लघुता निसर्गजनिता सा वाचि गम्भीरता

सर्वं पण्डितपुङ्गवे गुरुवरे **गङ्गाधरे** संस्थितम् ॥ ७६ ॥

श्रीमतां शास्त्रिवराणां देहावसानसमये द्वौ अनुजौ, एकः पुत्रो,

एका जातापत्या कन्यका चेति परिवार आसीत् । तत्र प्रथमानुजाः साहित्यार्णवकर्णधारा महामहोपाध्याया अस्मद्गुरवः **श्रीरामशास्त्रि**पूज्यपादास्त्वचिरादेवोपरता इति नूनं परं दुर्भाग्यं सुरभारत्याः ।

या प्रौढिः पण्डितानां सदसि समुचिता वाग्मिता या च चित्रा
नैपुण्यं यच्च सर्वेष्वपि च मधुरता या च वाचि स्थिताऽऽसीत् ॥
आजन्मैकान्तचिन्तानुभवसमुदितः कोऽप्यपूर्वः स बोध-
स्तत्सर्वं यातमस्तं सपदि गुरुवरैः साकमत्यन्तमेव ॥ ७७ ॥

ततः कनीयांसोऽनुजा विद्वत्कुलधौरेयाः साहित्यसम्पत्सम्राजो महामहोपाध्यायाः पूज्यपादाः **श्रीलक्ष्मणशास्त्रिणः** सन्ति यैरेवाद्य तातनृ**सिंहशास्त्रि**साहित्यसम्प्रदायधुरा धारिता ।

गुरुचरणानां प्रियतनयाः विद्यायां विनये सौजन्ये च निजताता-नुकारिणः प्रथितकीर्तयः काशिकराजकीयसंस्कृतपाठाशालायां साहि-त्यदर्शनप्रधानाध्यापकाः साहित्याचार्याः पूज्यवराः **श्रीभालचन्द्र-शास्त्रि**नामधेयाः सन्ति ।

यैरद्यापि निजान्वयस्य महिमा संरक्षितः सादरं
छात्रौघोऽपि सहस्रशः प्रतिदिनं यैः पाठ्यते निर्भयम् ।
राकाचन्द्रसमानकीर्तिनिवहास्ते **भालचन्द्राह्वया**
नन्दन्तु प्रियपुत्रपौत्रसहिता नूनं समानां शतम् ॥ ७८ ॥

श्रीमतां शास्त्रिवराणामगणितेषु सकलभारतवर्षव्यापिषु शिष्येषु ये सविशेषं प्रसिद्धिभाजः यैश्चाऽद्याऽपि सर्वविषयेषु विद्याः प्रतिष्ठापि-ता स्तेषु कतिपयानां नामानुकीर्तनमिह नानुचितं भवेत् ।

तत्र प्रथमतो विद्वद्वृन्दवन्द्यपादारविन्दा गुरुचरणाधिगततदीय-

सकलविद्याः प्रखरतरवैराग्यभास्करनिर्दग्धसांसारिकबन्धना महामहोपाध्यायाः **श्रीनित्यानन्दपन्तपर्वतीय** पूज्यपादाः सन्ति

**श्रीराजारामशास्त्रि** प्रभृतिगुरुवरैर्वैदुषी शब्दशास्त्रे
या ऽपूर्वा ऽऽविष्कृताऽऽसीदथ च निपुणता धर्मशास्त्रे च यादृक् ।
सा **नित्यानन्द**विद्वन्निकषमुपगता सम्प्रदायक्रमेण
सम्प्रत्यग्रे न पश्यत्यपरमभिमतं संश्रयं कञ्चिदेषा ॥ ७९ ॥

श्रीमतां शास्त्रिवराणां सर्वतः कनीयांसो ऽनुजाः श्रीमन्महामहोपाध्याय **श्रीलक्ष्मणशास्त्रि**तैलङ्ग पूज्यचरणा अपि शिष्यकोटिनिविष्टा एव ।

द्राक्षापाकमुपेयुषीं रसमयीं वाचं यदीयां चिरं
शृण्वानेव सरस्वती न कुरुते वीणां प्रवीणां करे ॥
विद्वद्वन्द्य**नृसिंहशास्त्रि**कविताधाटी कुलानुक्रमात्
येष्वेवास्ति समाश्रिता कविकुलाचार्येषु सा केवलम् ॥ ८० ॥

श्रीमन्तो ऽशेषदर्शनविमर्शनाविभास्वरप्रतिभाविशेषाः तर्ककर्कशविचारचातुरीधुरीणाः साहित्यपारावारपारङ्गमाः मध्वसम्प्रदायाचार्याः साहित्याचार्यतर्करत्नेत्यादिबहुतरोपाधिविभूषिताः **श्रीगोस्वामिदामोदरलालशास्त्रि** पूज्यचरणा अपि शास्त्रिवराणां विशिष्टा एव शिष्याः—

नानाकल्पविकल्पजालकलितां प्रौढोक्तिगूढाशयां
साहित्याध्वविहारिणीमपि पुनस्तर्कैः सदैवोज्वलाम् ।
येषां वाचमकुण्ठितां प्रतिपदप्राप्तप्रकर्षां चिरं
शृण्वन् गीष्पतिरात्तविस्मयभरव्यात्ताननो जायते ॥ ८१ ॥

अशेषविद्याऽऽपगासङ्गमसङ्केतस्थ महासागरायमाणाः न केवलं भारतवर्षएव अपि तु सर्वभूभागे स्फीतचन्द्रावदातसुयशसः कविकुलचक्रवर्त्तिनः पाटलिपुत्रविश्वविद्यालयसंस्कृतप्रधानाध्यापकाः साहित्याचार्य एम्. ए. **श्रीपाण्डेयरामावतार**शर्माणोऽपि सविशेषमनुगृहीताः शिष्याः शास्त्रिवराणाम् —

कवितावनितास्वयंवृता दयितास्ते महिता भुवस्तले ।
बुधमण्डलसादरेक्षिता जनताविस्मयकारिकीर्तयः ॥ ८२ ॥

प्रौढाः पण्डितमण्डले बहुविधे वादाहवे जित्वरा
विख्याता अपि वादिनः क्षणमलं स्थातुं न येषां पुरः ॥
वाग्देवी सततं यदीयरसनारङ्गस्थले नृत्यति
प्रीत्या, यैर्विहिता जनोपकृतये ऽनेके निबन्धा वराः ॥ ८३ ॥

अशेषसद्गुणगणपरीक्षणनिकषोपलाः समस्तविद्यानिस्तुलव्याख्यातारः त्यागमूर्तयो महनीयचरिता ऋषिकल्पाः जयपुरराजकीयविद्यालये भूतपूर्वसंस्कृतप्रधानाध्यापकाः **श्रीद्राविडवीरेश्वरशास्त्रिणोऽपि** शिष्या एव शास्त्रिवराणाम्—

सत्पक्षस्य समर्थनाय सततं ये सादराः सर्वतो
विद्वत्संसदि गीष्पतेरपि पुरो येषां न भीर्लेशतः ।
यैरात्मार्जितभूरिवित्तमखिलं सत्पाठशालाकृते
दत्त्वा दम्भजुषां धनैकजनुषां वैलक्ष्यमुत्पादितम् ॥ ८४ ॥

श्रीमन्तो ऽनेकमहीपालशिरोमुकुटमाणिक्यरञ्जितचरणनखद्युतयः श्रीमन्नेपालसम्राड्गुरवो विद्वद्धौरेयाः **श्रीहेमराजगुरवोऽपि** प्रियतमाः शिष्याः शास्त्रिवराणाम्—

नम्राः प्राञ्जलयो बुधाः प्रतिदिनं तिष्ठन्ति यत्प्राङ्गणे
नेपालाधिपति र्विभी र्विहरते र्यन्मन्त्रतेजोबलात् ।
वाग्देवी च रमा च यान् बुधवरान् तुल्यात्मना सेवते
कीर्तिश्चन्द्रसमा हिमालयमपि प्रायो हसत्युच्चकैः ॥ ८५ ॥

श्रीमन्तो ऽनन्तसामन्तमौलिलालितचरणाः विद्यावतामग्रेसराः प्रबलप्रतापशालिनः काशिकाधीशाः **श्रीमत्प्रभुनारायणसिंहशर्माणो**ऽपि सुचिरं शास्त्रित्राधिगतविद्याः शिष्यनिभा एव शास्त्रिवराणाम्--

यैरेवाऽद्य गुणोत्तरैर्विजयते राजन्वती भूरियं
येषां कर्मठतां विलोक्य सहसा सत्यं युगं स्मर्यते ।
यद्दानोदकपूर एव बहुलो गङ्गात्मना निर्गतो
यत्कीर्त्या शशिशुभ्रया सह पुनः पाथोनिधिं गाहते ॥ ८६ ॥

श्रीमन्तः सकलदर्शनकोविदाः बहुविधपरीक्षाम्बुधिसन्तरणाधिगतामन्दविरुदावलयः सम्प्रति काशिकराजकीयसंस्कृतपाठशालायां मीमांसाद्वयाध्यापकाः **श्रीबालबोधमिश्रशर्माणो**ऽपि प्रियशिष्याएव शास्त्रिपादानाम्—

शास्त्राणि सर्वाण्यपि पाठयद्भि-
र्यैर्निर्भयं शान्तिमतां धुरीणैः ॥
अध्यापनोत्थं किल सद्गुरूणां
संरक्षितं गौरवमादरेण ॥ ८७ ॥

अन्येऽपि **श्रीमन्मुकुन्दझाशर्माणः** **श्रीमच्चक्रधरझा**प्रभृतयश्च सङ्ख्यातिगा विद्वत्कुलालङ्काराः श्रीशास्त्रिवराणां शिष्या अद्य-

ऽपि पण्डितमण्डले सुप्रतिष्ठितास्तिष्ठन्त्येव। येषां सर्वेषां नामानुकीर्त्तन-मिह विस्तारभिया परिहृतम् ।

श्रीमतां वैदिकमूर्धन्यानां श्री**बालकृष्ण**भट्टानां पौत्रः श्रीमान् व्याकरणाचार्यो धर्मशास्त्रादिष्वपि प्ररूढप्रौढव्युत्पत्ति**र्नेने**-इत्युपाख्यो **गोपालशास्त्रि**शर्माऽपि सुहृत्तमोऽस्माकं चरमशिष्यः शास्त्रिवराणाम्-

सम्राट्संस्थापितकाशीस्थसुरगीर्मन्दिरे वरे ।
अध्यापकपदे नूत्ने नियुक्तो यो विराजते ॥ ८८ ॥

ये च शास्त्रिवराणां प्रथिता अपि शिष्या दुर्दैवादल्पायुषो दिवं गता स्तेष्वपि कतिपयानां नामानि कीर्त्यन्ते ।

काशीस्थभट्टकुलरत्नमनस्तकीर्ति-
विद्वत्तमो विविधवादिगणस्य जेता ।
नेता गणस्य च **दिवाकर**नामधेयो
भट्टो बभूव बत सद्गुरुपट्टशिष्यः ॥ ८९ ॥

काशीस्थराजवरसंस्कृतपाठशाला-
संख्यावतां धुरि समेधितकीर्तिराशिः ।
धर्माधिकारिकुलसागरकौस्तुभश्री-
**नागेश्वरो**ऽपि च सुताधिक एव शिष्यः ॥९०॥

आज्ञां प्राप्य गुरोरवेतनमलं यैः पठिता निःस्पृहै-
श्छात्राः सन्ति सहस्रशोऽत्र विदुषां वृन्देषु ये पूजिताः ।
**श्रीबाबा**ऽपरनामका गुरुवराः श्री**रामचन्द्राभि**धाः
शिष्यास्ते प्रथिताः कृतं नु खलु यैर्लोकोपकारव्रतम् ॥९१॥

शेषान्वयक्षीरसमुद्रजन्मा
बभूव विप्रः **शिवरामनामा** ।
यः शास्त्रिवर्यस्य सुशिष्यभाव-
मासाद्य विद्वन्मतकीर्तिरासीत् ॥ ९२ ॥

श्रीकाशिकासुरगवीसदने प्रसिद्धे
योऽध्यापकत्वमधिगम्य बहुप्रयत्नैः ।
विख्यातिमान् **मदनमोहन** पाठकाख्यः
शिष्यो गुरोः समभवद् बुधवृन्दमान्यः ॥ ९३ ॥

पूनाऽभिधाननगरस्थितराजकीय-
पाठालये सुरगिरां प्रथमः प्रवक्ता ।
षड्दर्शनीविमलधीस्तु **मुकुन्दशास्त्री**
शिष्यो गुरोर्विजितदक्षिणदिग्बुधेन्द्रः ॥ ९४ ॥

नानानिबन्धरचनाजनितावदात-
कीर्तिर्गुरोश्चरणयोरतिभक्तिशाली ।
सङ्गीतविद् बुधवरस्तु **सुदर्शनाख्यः**
शास्त्री बभूव गुरुवर्यविशिष्टशिष्यः ॥ ९५ ॥

येऽस्मन्मूर्धनि सर्वदा समुदितास्तिष्ठन्ति तेजोमया
वर्षन्ति स्फुटमुच्छ्रितामनुपलं तां वाक्सुधां निस्तुलाम् ।
येषां प्रेरणया मया विरचितः सोऽयं निबन्धोऽधुना
ते धन्याः सततं जयन्ति चरणाः श्रीमद्गुरूणां मम ॥ ९६ ॥

**नित्यानन्द**वपुर्निरन्तरन्तरगलद्वात्सल्यपूरोत्तरो
**नागेश**प्रणयप्रसाधितमहाहारप्रकारोद्धुरः ।

रामे लक्ष्मणसंयुते कृतमना यो भालचन्द्रात्मकः
श्रीदामोदरपाणिसेवितपदः पायात्स गङ्गाधरः ॥ ९७ ॥

श्रीगङ्गाधरसद्गुरुप्रतिफलत्सारस्वतज्योतिषः
श्रीरामाङ्घ्रिनिषेवणाप्तसुमतेः सन्तीर्णशास्त्राम्बुधेः ।
श्रीमद्भैरवनायकात्मजजनुषः सद्धर्मलक्ष्मीजुषः
श्रीनारायणशर्मणः कृतिरियं विद्वन्मुदे जायताम् ॥ ९८ ॥

वेदाष्टाङ्कधरासंख्ये विक्रमार्कस्य वत्सरे ।
ज्येष्टशुक्लप्रतिपदि कृतिरेषा समापिता ॥ ९९ ॥

इति श्री खिस्ते--इत्युपनामकनारायणशास्त्रिणा प्रणीते
विद्वच्चरितपञ्चके श्रीगङ्गाधरशास्त्रिचरितं
नाम प्रथमः परिच्छेदः ।





श्रीमन्महामहोपाध्याय श्रीकैलासचन्द्रशिरोमणिः ।

जन्मशकः १७६२ मृत्युशकः १८३०

कणभक्षाक्षचरणागम एव वपुर्धरः ।
कैलासचन्द्रो जयति विद्वद्वृन्दशिरोमणिः ॥

॥ श्रीः ॥

# अथ श्रीकैलासचन्द्रशिरोमणिचारितम् ।



अथ ब्रूमः क्रमप्राप्तं विद्वद्वृन्दशिरोमणेः ॥
कैलासचन्द्रविदुषश्चरितं जनपावनम् ॥ १ ॥

गङ्गातरङ्गाकलितोत्तमाङ्गाः
प्रभूतभूतिस्फुरदुज्ज्वलाभाः ।
मौलिस्थलस्थाद्विजराजजुष्टा
जयन्ति बङ्गाः शिवरूपभाजः ॥ १ ॥

शिवात्मतामेव विभाव्य येषां
जगत्त्रयीयौवतमौलिमाला ।
बाला हिमाद्रेर्वसतिं विधत्ते
कालीस्वरूपा भुवनावनाय ॥ २ ॥

पद्माऽपि यत्सद्मगता विभाति
प्रीत्या द्रुताऽन्तःकरणेव नूनम् ।
वाग्देवताऽपि प्रणयप्रकर्षं
बिभर्ति येषूदितपण्डितेषु ॥ ३ ॥

सौन्दर्यसारैर्ललनाजनानां
सदोदितैराननपूर्णचन्द्रैः ।
ज्योतिर्विदामेव कथासु यत्र
तमिस्रपक्षः श्रुतिमार्गमेति ॥ ४ ॥

तद्देशसारं सुषमानिधानं
श्रिया धिया किञ्च विवर्धमानम् ।
पुराणगाथास्वपि वर्ण्यमानं
सन्मण्डलं राजति **वर्द्धमानम्** ॥ ५ ॥

अभ्रंलिहाग्रैस्तरुभिः समृद्धो
विहारभूरेव वचोऽधिदेव्याः ।
'**धात्री**' ति नाम्ना प्रथितोऽस्ति तत्र
ग्रामो गुणिग्रामविवर्द्धितश्रीः ॥ ६ ॥

सप्तर्षीणामिवोदारा आश्रमा जनपावनाः ।
स्मृतिन्यायादिविद्यानां यत्र सप्ताऽऽलयाः स्थिताः ॥ ७ ॥

आसीत्तत्र समस्ततार्किककुलालङ्कारहीरोपमो
राकारचन्द्रशतावदातसुयशा अध्यापकाग्रेसरः ।
श्रीमान् मानिजनाग्रणीर्द्विजवरः सत्तर्कपञ्चाननो
नाम्ना **श्रीभवनाथ** इत्यभिहितो विद्यातपोऽभ्यर्हितः ॥८॥

तस्मादाविरभूत् प्रभूतधिषणः सङ्ख्यावतां धूर्धरो
मन्वादिस्मृतिशास्त्रदर्शनकथासूच्चैर्लसत्कौशलः ।
राढीयद्विजमण्डलीदलपतिर्यः सार्वभौमाख्यया
ख्यातोऽभूदभिधानतोऽपि च **घनश्यामः** प्रकामं भुवि ॥९॥

पवित्रितभारद्वाजगोत्रो मुख्योपाध्यायवंशमुक्तामणिः सङ्ख्या-तीतैः सङ्ख्यावद्भिर्जन्मना पवित्रिते राढीयश्रेणिविभक्ते कुले लब्धजन्मा श्रीमान् **घनश्याम**सार्वभौममहाशयः स्वकुलोचितमध्यापनादिकार्य-जातमाचरन् पतिव्रताललामभूतया श्रीमत्याऽऽ**द्रमणिदेव्या**

साकं सुखेन सर्वाश्रमोपकारक्षमं गार्हस्थ्यमाचरन्नवात्सीत् ।

अथ चिराराधितस्य भगवतः शशिशेखरस्य प्रसादात्सार्वभौम-महाशयस्य धर्मपत्नी श्रीमत्यादरमणिदेवी पुञ्जीभूतमिव पुण्यं गर्भमधत्त।

अथ द्विपञ्चाशदधिकसप्तदशशततमे शके १७५२ सौरमाघस्य पञ्चमदिवसे शुक्लचतुर्थ्यामवतार इव सर्वविद्यानिधेर्भगवतो गणपतेरस्म चरितनायकः **कैलासचन्द्रः** सुकृतपेटिकाया इव मातृकुक्षेः प्रादुरास ।

गौर्या गणेश इव मार इवेन्दिरायाः
शच्या जयन्त इव राम इव स्वमातुः ।
जातस्तदादरमणेः परमादरस्य
पात्रं पवित्रचरितस्तनयः सुवर्चाः ॥ १० ॥

उभयकुलसरोजोल्लासनायाऽर्ककल्पे
कलयति जनिमुच्चैः श्रीघनश्यामसूनौ ।
सुरभिकुसुमवर्षैर्व्योम्नि वैमानिकेन्द्राः
कृतपदमधिचित्तं ख्यापयन्ति स्म मोदम् ॥ ११ ॥

पापप्रभावकलुषीकृतधर्ममर्मो-
द्धारं विधित्सुमनघं शिशुमेनमुच्चैः ।
निश्चित्य भूरपि जगन्निवहस्य धात्री
**धात्री** बभूव परिपोषणहेतुनाऽस्य ॥ १२ ॥

इत्थं लब्धजन्मा जनिताप्तजनबहलशर्मा कुमारः **कैलासचन्द्रो** बालकेलीरनुभवन् जनन्याः सुखमये क्रोडे विलसन् शुक्लपक्षे शशीव प्रतिदिनं कलाविशेषं पुष्णन् ववृधे । सञ्जातजातकर्मादिसंस्कारः

शाणोल्लिखितो मणिरिव प्रवृद्धतेजाः पञ्चमे हायने ग्रामगुरोः पाठालयं प्रविश्य तत्र स्वल्पेनैव समयेन भाषाशिक्षां समाप्य तातेन सम्पादितो-पनयनसंस्कारो विप्रोचितक्रियाकलापान् कलयन् ब्रह्मवर्चसम्बन्धसमा-ह्रितोरुतेजाः प्रजापतिरिव प्रगुणगुणगणस्य विद्वद्वरस्य निजपितृव्यस्य **श्रीजनार्दनतर्कवागीशमहोदयस्य** सविधे सविधि समधीयानः व्याकरणं कोशकाव्यानि च साधु सम्पाद्य तेषु प्ररूढप्रौढव्युत्पत्तिरष्टा-दशहायने वयसि वर्त्तमानः न्यायवैशेषिकदर्शनमधिजिगमिषुः स्वग्राम समीपवर्त्ति **'देवीपुरं'** प्रातिष्ठत ।

तत्र ग्रामे मूर्तिमतः कणादस्येव जराजर्जरस्याशीतिवर्षाधिकव-यसः श्रीमतो **हरचन्द्र**न्यायवागीशमहोदयस्य सविधे समारब्धन्याय शास्त्राध्ययनः कियतैव कालेन 'सामान्यनिरुक्ति' पर्यन्तं समाप्य गृहं प्रतिनिवृत्तः । पित्रोरनुरोधमनुलङ्घनीयं मन्यमानः दारपरिग्रहं च प्राप्तकालमाकलय्य सुवंशमुक्तायमानया सुलक्षणया श्रीमत्या **तरङ्गि-णी**देव्या साकं कृतोद्वाहः शिव इव शैलबालया, हरिरिव कमलास-नया, वसिष्ठइवाऽरुन्धत्या सविशेषं व्यराजत ।

ब्रह्माद्यास्त्रिदिवाकसोऽपि सकलास्तां तां स्वशक्तिं मुदा
सम्प्राप्यैव निजाधिकारगुरुतां सत्कर्तुमत्रेशते ।
इत्यालोच्य तरङ्गिणीं सुकुलजां **कैलासचन्द्रः** सुधीः
कान्तां धर्मसहायिकां शुभगुणां तां पर्यणैषीन्मुदा ॥१३॥

हीरश्रीरिव काञ्चनस्य वलयं विद्येव विद्वन्मुखं
कामारेरिव मस्तकं सुरधुनी ज्वाला हुताशं यथा ।
देवी साऽपि तरङ्गिणी गुणगणैः पूर्णा पतिं सुन्दरं

लब्ध्वा देवगुरूपमं विरुरुचे **कैलासचन्द्राभिधम्**॥१४॥

तस्याः पतिव्रतायाः सुकृतैरमितैः फलोन्मुखैर्नूनम् ।
**कैलासचन्द्र**भाग्यं प्रत्यहमुद्यच्छुभं रेजे ॥ १५ ॥

अथैवं कतिपयान्यहानि नवोद्वाहमहेनाऽतिवाह्य प्रबलपिपठिषाकुलचेताः सुचेता असौ विशेषाधिजिगमिषया गीर्वाणवाणीमातृगृहायमाणं पुरातनं विद्यापीठं **नवद्वीप**माससाद ।

यच्च,

देवाचार्यवचोविचारगरिमाऽतिक्रामिवाग्गुम्फनै-
धौरेयैर्विदुषां कृताधिवसति प्राप्तप्रकर्षोदयम् ।
वाग्देव्याः सदनायमानमनिशं विद्यार्थिवृन्दाञ्चितं
विद्यापीठमिति प्रथामुपगतं वङ्गावनौ राजते ॥ १६ ॥

गङ्गानीरतरङ्गसङ्गमवशात्पूतान्तरैर्गौरवं
प्राप्तैः फुल्लसरोजसौरभवहैर्वातैः सदा पावितम् ।
वैरिञ्चं भवनं विहाय सरसामत्रैव वाग्देवता-
मन्वक् यद्भिरिवर्षिभिर्बुधवरैरापूरितं सर्वतः ॥ १७ ॥

यत्रैव,

दीनानां कलिकिल्मषाकुलहृदां स्वैरेव पापव्रजै-
राकण्ठं प्रबलाऽनुतापजलधौ मग्नात्मनां प्राणिनाम् ।
उद्धाराय धृतव्रतो व्रजवधूगौराङ्गगाढोत्तरा-
दाश्लेषादिव गौरताऽङ्कितवपु**श्चैतन्यदेवो**ऽभवत् ॥१८॥

प्रावृट्कालकरालपूरभरितां शैलोत्थितां वाहिनीं
न्यक्कुर्वन्, रभसादघानि दलयन् चेतांसि संमोहयन् ।

श्रीचैतन्यहिमाचलात्समुदितः सद्भक्तिभागीरथी-
पूरः प्लावयतेतमां त्रिभुवनीं कृत्स्नां दृशा तुल्यया॥१९॥

एवंविधे नवद्वीपे समागतोऽसौ भविष्णुविपाश्चिच्चक्रवर्त्ती गृहीतावतारमिव गौतमं सकलशास्त्रपारावारपारीणं नैकविधनिबन्धनिर्माणसमुच्छलदच्छसुयशःस्तोमसोमधवलितदशदिशामुखं विश्वविख्यातवैदुषीवैभवं **श्रीमद्गोलोकनाथ**न्यायरत्नमहाशयमुपगम्य तदन्तिकेऽध्येतुमारभत । मासचतुष्टयमात्रमेवेत्थं समयेऽतिवाहिते दुर्दैवात्सकलस्य विद्वत्कुलस्य विशेषतः कैलासचन्द्रस्य स च श्रीमान् **गोलोकनाथ**न्यायरत्नमहाशयः करालेन कालेन स्ववशं नीतः । अथ भृशं निर्विण्णचेताः **कैलासचन्द्रो**ऽध्ययनप्रत्यूहोपगमेन दुरदृष्टमात्मनो मन्यमानः पुनरपि गृहं प्रत्यावर्त्तत । अथैवमेव कियन्तं चित् कालमतिवाह्य पुनरपि नवद्वीपमागत्य तत्रैव पण्डितवर्यात् **प्रसन्नचन्द्र**तर्करत्नमहाशयात् अवशिष्टं तर्कशास्त्रमधीत्य समाप्य च कृत्स्नं न्यायवैशेषिकदर्शनाऽध्ययनं वादाहवेषु तत्रत्यैः पण्डितैः सम्यक् परीक्षितो विपक्षिणां पक्षं युक्तिटङ्कैः परितक्ष्य लब्धबहुमानः '**शिरोमणिः**' इ-इत्युपाधिना विभूषितः भूयोऽपि स्वदेशं प्राऽतिष्ठत । ततः स्वगृह एव चतुष्पाठीं निर्माय छात्रानध्यापयितुमारभत । नानादिगन्तागता अन्तेवासिनोऽस्याध्यापनोद्भवसुयशःसौरभसमाकृष्टा एतत्सविधे ऽध्येतुमुपागमन् । अयमपि सर्वाणि शास्त्राणि निर्विशङ्कं तथाऽध्यापयतिस्म, यथैतदन्तिकाऽधीतविद्यश्छात्रो नाऽन्यत्र गन्तुमैहत ।

नानाशास्त्रविचारकौशलवलल्लोकोत्तरप्रातिभ-
प्रोद्यन्नव्यविकल्पजालजटिलव्याख्यानवाचस्पतिः ।

छात्रौघप्रतिभाविकासनपटुः सच्छास्त्रसन्मर्मवि-
द्वन्द्यः पाठयति स्म पाण्डितवरः **कैलासचन्द्रः** सुधीः ॥२०॥

इत्थं सुखेन त्रीणि वर्षाणि यावत्समयं यापयतोऽस्य पण्डिताखण्डलस्य पुनरपि खेदनिदानं दुर्दैवं समुपातिष्ठत । शिरोमणिमहाशयस्य ज्यायान् भ्राता **प्रसन्नचन्द्रः** यः खलु पारसीकादिभाषासु परमं नैपुण्यमासाद्य मुन्सिफ Munsiff परीक्षायां सम्यगुत्तीर्णो भूत्वैवाऽसमय एव स्वर्गमारोहत् । तदीयाऽकालनिधननिर्विण्णान्तरा शिरोमणिमहाशयस्य प्रसूरपि भग्नहृदया सती जान्हवीतीरे विनश्वरं वपुर्विसृज्य सतीलोकं जगाम । इत्थं ज्यायसो भ्रातुर्जनन्याश्च निधनेन नितान्तं निर्विण्णोऽपि कृत्यविच्छिरोमणिमहाशयस्तयोः पारलौकिकं कृत्यकलापं सम्यक् सम्पादितवान् ।

आवाल्यात्सहपांसुकेलिसचिवः स्नेहस्य पात्रं परं
मातुर्वत्सलताविभाजनविधौ योऽभून्मुहुः कोपनः ।
रोषं तोषमपि क्षणादकलयद्यः केलिषु प्रायशो
भ्रातुस्तस्य न सोढुमेष विरहं शक्तो बभूव ध्रुवम् ॥ २१ ॥

मातुर्वियोगजशुचा परितप्यमान-
चित्तोऽप्यसौ सहजधीरमना मनस्वी ।
संसारमेनमखिलं मरणैकशीलं
निश्चित्य चेतसि बबन्ध धृतिं कथंचित् ॥ २२ ॥

इत्थं शास्त्रविचाराऽनुभावोद्भूततात्कालिकधृतिरपि मानवस्वभावसुलभेन शोकावेगेनान्तरान्तरा मुह्यमानः स्नेहातिशयभाजनमपि स्वजन्मग्रामं शून्यमिव पश्यन् शिरसि भारायमाणात् मातृश्राद्धोद्भवादृणा-

दुद्धारं च समीहमानो नव्यदेशदिदृक्षया सार्द्धं छात्राभ्यां **तारिणीचरण वरदाकान्त** न्यायरत्नाभ्यां **धात्री**ग्रामात् प्रस्थाय **देवीपुरस्थ** सिंहवंशीय स्वसुहृद्वर **राजकृष्णसिंह** सन्निधिं जिगमिषुः पाटलिपुत्रमुपागमत् । तत्र सिंहमहोदयस्याऽसन्निधानेन खिद्यमानो **मुङ्गेर**नगरं प्राऽतिष्ठत । तत्र सिंहमहोदयदर्शनलाभेऽपि दुरदृष्टमहिम्ना स्वकार्यसिद्धेरसम्भावनामेव पश्यन् मानधनाग्रणीः **शिरोमणि**महाशयः कृतदृढनिश्चयो यावज्जीवं भगवन्तं श्रीकाशी विश्वेश्वरमेवाराराधयिषुः मोक्षमार्गप्रकाशिकां काशिकां नाम भगवतः शम्भोर्नगरीं प्रातिष्ठत। कियन्तं चिदध्वानं नौकया, कियन्तं चिद्बाष्पशकटेन, कियन्तं चित पद्भ्यामेवाऽतिक्रम्य कतिपयैरहोभिः पचेलिमप्राचीनपुण्यपुञ्जपाकात् भगवतीं काशिकामाससाद । या च,

विद्यावैदुष्यसीमाऽतिगबुधनिकरैर्निर्जरैर्मानवाभै-
रापूर्णा स्वर्णधामप्रचुरपरिचयोद्दीपितोद्दामधामा ।
वाग्देव्या वासभूमिः प्रतिपथविलसन्मोक्षपण्याग्रगण्या
कारुण्योदारधाराधरहरनगरी राजते काशिकाख्या ॥ २३ ॥
देवाः सर्वे स्वधाम्नां सुचिरपरिचयं हन्त सन्त्यज्य सद्यः
काशीं यान्तं कुटुम्बाकलितमघहरं देवदेवं पुरारिम् ।
तत्तत्कालानुरोधाकलितसमुचिताचारनेपथ्यभाजो
यान्तो ऽन्वकू पण्डितेन्द्राकृतिकृतकुतुका यत्र नूनं वसन्ति ॥२४॥

यस्यां च,

श्रीमद्विष्णुपदाम्बुजन्मजरसाराऽऽसारोत्थितेवोच्छल-
न्माधुर्या स्फुटपङ्कजोदरचरद्भृङ्गालिगीताञ्चिता ।

स्नानाऽभ्यागतसिद्धतापसजनै र्भक्त्या मुहुः संस्तुता
गङ्गा यत्र विराजते हरशिरस्युष्णीषतां बिभ्रती ॥ २९ ॥

इत्थंविधां भगवतः शूलिनो मोक्षराजधानीं भगवतीं वाराणसी-मासाद्य परमानन्दसन्दोहतुन्दिलाऽन्तरो विपश्चिद्वरोऽसौ काशीस्थता-त्कालिकसकलपण्डितधौरेयैर्गुरुरूपेणाऽभ्यर्हितस्य सर्वविद्यानिधानस्य दिगन्तविश्रान्तसुयशसः संन्यासिनोऽपि परोपकाराय सम्पादितविपुलै-श्वर्यस्य **श्रीमद्विशुद्धानन्दस्वामिनो** मठमनन्याश्रयः शरणीचकार ।

अथ तत्रैव निहितनिजनिखिलपुस्तकभाण्डादिवस्तुजातः सुजातो-ऽसौ सद्यो जान्हवीतीरमासाद्य सन्तापहारिणि सुधायमानवारिणि त-दीये पाथःपूरेः सुचिरमवगाह्य कृतोन्मज्जनः सन्ध्यावन्दनजपादि-स्वीयमान्हिककलापं सम्यक् सम्पाद्य बुभुक्षाक्षामकण्ठोऽपि स्थानादिसु-स्थितेरभावात् पीयूषप्रतिमं जान्हवीजलमेवाऽऽकण्ठं निपीय पुनर्मठं प्रत्यावर्तत । गृहस्थाश्रममधितिष्टतोऽस्य सन्यासिनां मठे स्थितिरनुचि-तेति स्वामिपादैः पर्यायेण प्रतिषिद्धनिवासोऽसौ सर्वथा ऽपरिचितेऽस्मि-न्नगरे कथं सुस्थितिः सम्पादनीयेति नितरामाकुलस्वान्तः आर्तत्राण-परायणं भगवन्तं नारायणमेव मनसा संस्मरन्नवसत् ।

ग्राहग्रस्तगजेन्द्रमोचनविधौ येनाऽविलम्बः कृतः
पाञ्चाल्याः कुरुराजसंसदि कृता येनैव रक्षा ध्रुवम् ।
यो भक्तौघविपन्निदानदलनः ख्यातोऽस्ति लोकत्रये
भक्तेनाऽऽर्तिजुषा ऽमुना हृदि धृतो नैनं कथं तारयेत् ॥ ३० ॥

अथ भक्तविपद्भञ्जनस्य भगवतो ऽनुग्रहादेव भोज्यवस्तून्यानेतु-मापणं गतेनैतदन्तेवासिना 'कोन्न' नगरवास्तव्यः शिरोमणिमहाशयस्य

सतीर्थ्यः **वैकुण्ठनाथ**न्यायरत्नमहाशयो दृष्टः पृष्टश्च तेनाऽसौ सुस्पष्टमाचष्ट स्वगुरोरुपस्थितां विपदम्। अनन्तरं तत्कथनानुसारेण स्वगुरोः कुलशिष्यं काशीस्थाऽगस्त्यकुण्डवीथीनिवासिनं **रामदास**भट्टाचार्यमासाद्य तस्मै सकलमुदन्तमाख्याय तत्सहकृतोऽसौ सद्यो मठमागत्य न्यवेदयत सर्वमुदन्तजातं गुरवे। रामदासभट्टाचार्योऽपि सबहुमानं शिरोमणिमहाशयं स्वगृहमानाय्य यथाशक्ति समुपाचरत्। इत्थमुपस्थिताया विपदो वारणमभूत्।

अथ रामदासभट्टाचार्यसद्मनि त्रिचतुराण्येवाहानि गमयित्वा श्रावणमासस्य चरमे भागे कस्मिंश्चिद्भाटकगृहे ऽसौ सुखमुवास। इत्थमनुपद्रवमक्लेशं च तत्र निवसताऽनेन प्रत्यहं गङ्गास्नान विश्वनाथदर्शनादिपुण्यकर्मकरणद्विगुणितमनोमोदेन प्रज्ञावतामग्रेसरेण तार्किकशिरोमणिना शिरोमणिमहाशयेनाऽवारितविद्यार्थिवृन्दमध्यापनसदाव्रतमारभ्यत। बहवश्छात्राः पण्डिताश्च कौतुकिनोऽस्य पाण्डित्यप्रकर्षमालोक्य भृशं मुग्धान्तःकरणाः साधुवादपुरःसरं प्रशशंसुरेनम्।

इत्थं वङ्गमहीसुरेश्वरगुरोः काशीपुरीमीयुष-
स्तत्रत्यैरपि पण्डितैः सकुतुकं सम्मानितस्योच्चकैः।
कर्णाकर्णिकया श्रुतैतदसमव्याख्यानसत्कौशलै-
श्छात्रौघैरुपचीयमाननिकरैर्जज्ञे यशो निस्तुलम्॥ २७॥

अथैष वेदान्तविद्यावाचस्पतेर्द्राविडादच्युतानन्द परिव्राजकाद्विद्याविनिमयविधया वेदान्तमधीयनस्तं च न्यायवैशेषिकदर्शनमध्यापयन् लोकातिगस्वीयशेमुषीविशेषमहिम्ना ऽल्पेनैव कालेन वेदान्तविद्यापारङ्गमो ऽभवत्। शास्त्रार्थसभासु च पूर्वोत्तरपक्षयोरस्य विलक्षणां

दक्षतां च प्रत्यक्षं लक्षयन्तो विचक्षणा न्यायतन्त्रोज्जीवनाय गृहीतावतारमिव गौतमममुं मन्यमाना निष्पक्षमेतदीयं सुयशः सर्वत्र घोषयन्ति स्म।

अथ सर्वतः प्रसृमरं सौरभाकृष्टशास्त्ररसिकवृन्दमेतदीयसुयशःपरिमलं घ्राहं घ्राहं मानधनाग्रणीरपर इव भास्करस्तेजसा विद्यया च, ज्योतिर्विदग्रेसरस्तात्कालिककाशिकराजकीयपाठशालीयपण्डितमूर्धन्यः महामहोपाध्याय C. I. E. इत्याद्यनेकबिरुदावलीसमलङ्कृतो **बापुदेवशास्त्रिप्रवरो** ऽमुष्मिन् भृशमावर्जितस्वान्तोऽभूत्। शरभुजनिधिचन्द्र १९२५ मिते वैक्रमेऽब्दे काशिकराजकीयपाठालये एकं नैयायिकपदं रिक्तमभवत्, तस्मिन्पदे पण्डितशिरोमणिं शिरोमणिमहाशयं स्थापयितुं श्रीमान् **बापूदेवशास्त्री** समीहमान एनमाह्वयत्, सादरं न्ययुङ्क्त च तस्मिन्पदे केवलं मासत्रयाय। तदानीं तत्पदस्य मासिकं वेतनं प्रायः पञ्चत्रिंशद्रूप्यकपरिमितमेवासीत्, परन्तु विद्वच्छिरोमणेरस्य गौरवरिरक्षयिषया चत्वारिंशद्रूप्यकपरिमितं क्रियते स्म।

अथैषा काशिकराजकीयपाठशाला ऽमुष्य सम्बन्धेन,

हरकरडमरूद्यत्सूत्रजालानुवाद-
प्रयतविबुधवृन्दा सर्वतः शोभमाना।
ध्वजमिलदमलाभश्वेतवासश्छलेन
प्रपतदमरसिन्धुः प्राप कैलासकोटिम्॥ २८॥

विद्वन्मण्डलकैरवाङ्कुरवनीमुन्मीलयन् ज्योत्स्नया
दुर्वादीन्द्रतमोनिवारणपटुः स्निग्धप्रभामण्डितः।

अन्तेवासिचकोरचर्वितवचोरोचिर्द्विजानां पति-

स्तत्राऽयं बुधपुङ्गवो विरुरुचे **कैलासचन्द्र**स्तदा ॥२९॥

ततो राजकीयपाठालये निर्भयं सर्वाणि शास्त्राणि अगणितेभ्यः शिष्येभ्यः प्रत्यहं पाठयन् अल्पेनैव कालेन अध्यापकानामध्यक्षाणां विद्यार्थिनां च चेतांसि तथाऽऽवर्जयामास यथा ते सर्वेऽपि मासत्रयाय नियुक्तमप्येनं चिरकालाय नियोजनीयमिच्छन्ति स्म ।

अथ निर्दिष्टे समये ऽवसिते एतदीयाध्यापनसौजन्यवैदुष्यादि-परितुष्टः तदानीन्तनः प्रधानाध्यक्षः "**ग्रिफिथ**" साहिब महोदयः शिरोमणिमहाशयमेव चिराय तस्मिन्पदे न्ययुङ्क्त ।

अथ तत्र निश्चितरूपेण नियुक्तोऽयं सम्प्राप्तसुस्थितिर्द्विगुणीकृतो-त्साहो ऽसङ्ख्यान् विद्यार्थिनः प्रत्यहं पाठशालायां गृहे च पाठयन् सर्व-तः प्रसृमरशरदिन्दुधवलसुयशःस्तोममण्डितः सुखेन कालं निनाय । श्रीमता शिरोमणिमहाशयेनाध्यापिता असङ्ख्याताः सङ्ख्यावन्तो ऽशे-षशास्त्राम्भोधिपारङ्गमा भारतवर्षे प्रायः सर्वत्रैव विद्यया तपसा तेज-सा च दीप्यमाना विलसन्त्येव । तेषां नामग्राहं वर्णनं वाक्पथमति-क्रामत्येव । परिशेषे तेषु विशिष्टानां कतिपयानां नामानि कीर्तयिष्यामः ।

प्रचण्डपाण्डित्यसहचरी शिरोमणिमहाशयस्य धार्मिकताऽपि नि-तान्तं स्पृहणीयैवाऽऽसीत् ।

नाऽसत्यं वचनं तदीयवदनं जिह्वान्तसद्मोल्लस-

द्वाग्देव्याः कृपयेव जातुचिदपि स्प्रष्टुं शशाक ध्रुवम् ।

चेतःपङ्कजमन्दिरान्तरचराद्विश्वेश्वरानुग्रहा-

देवाऽस्य प्रथते स्म नैव मनसि प्रायो विकाराऽङ्कुरः ॥३०॥

नैकेनाऽपि कदाऽपि तस्य वदने स्निग्धोज्ज्वलज्योतिषि
प्रातःफुल्लसरोजरोचिषि मनाग् भ्रूभङ्गलीलायितम् ।
दृष्टं नाऽपि पुनः श्रुतं न च सदा मन्दस्मितप्रोल्लस-
द्दन्तांशूज्ज्वलमद्य यावदपि तच्छिष्यैर्मुखं स्मर्यते ॥ ३१ ॥
एतत्कीर्तिकथा कथापथमतिक्रान्ता समुज्जृम्भते
वैदुष्यं पुनरस्य निर्जरगुरोर्गर्वापनोदक्षमम् ।
शिष्या दिक्करिसन्निभाः पटुधियो विख्यातसत्कीर्तयः
किं ब्रूमो वयमस्य तार्किककुलाऽलङ्कारचूडामणेः ॥ ३२ ॥

एकदा विश्वविख्यातया ललनयाऽपि पुरुषशतातिशायिविक्रम-विशेषया **'एनीबेसंट'** इत्याख्यया विदुष्या स्वपत्युः श्राद्धदिने त-दुद्देशेन सदक्षिणाकमामान्नं शिरोमणिमहाशयायोत्सृज्य प्रहितम् । असौ तदवलोक्य नितान्तं क्षुब्धचेतास्तदखिलं सद्य एव तदन्तिकं परावृत्य स्वोद्देशेन तत्कृतोत्सर्गमप्यात्मनः पातित्यजनकं विभावयन् सक्षौरं सचैलगङ्गास्नानादिकं प्रायश्चित्तं विदधे, तदैवास्य मनस्तुष्टिः सञ्जज्ञे । इति शृणुमो वृद्धमुखेभ्यः इत्थंविधान्यनेकान्यस्य महात्मनः पुण्यावदानानि स्वधर्मे प्रगाढां निष्ठां प्रकटयन्ति ।

अथ षण्णवत्यधिकाष्टादशशततमे इशवीये वर्षे १८९६ भारते-श्वर्या श्रीमद्विजयिनीदेव्या शिरोमणिमहाशयाय बहुमानपुरःसरं **'महामहोपाध्याय'** पदवी प्रदीयते स्म ।

साम्राज्ञ्या सादरं दत्ता पदवी सा महीयसी ।
**कैलासचन्द्र**मासाद्य सद्यो विद्योततेतराम् ॥ ३३ ॥

इत्थं राजकीयाऽधिकारिवर्गे प्रकृतिवर्गे च सममेव समासादित

बहुमानो मानधनाग्रणीः पण्डिताग्रणीः शिरोमणिमहाशयः न्यायदर्शनभाष्यस्यैकां टीकां निर्मितवान् इति शृणुमः। दौर्भाग्यादेवाऽस्माकं नाऽद्याऽपि साऽस्मद्दृष्टिगोचरमुपेता। कतिपयानि देवदेवीनां स्तोत्राणि च निर्मितवान्। तात्कालिकः काशीस्थराजकीयपाठालयप्रधानाध्यक्षः पण्डितैकपक्षपाती विद्वत्तमः श्रीमान् **आर्थरवेनिस** एम. ए. सि. आइ. ई. महोदयः शिरोमणिमहाशयं गुरुरूपेण सम्मानयन् प्रायो दुरूहान् न्यायवैशेषिकपदार्थान् ततो ऽधीते स्म। तस्मिन्नेवाऽवसरे शिरोमणिमहाशयेन तद्बोधनाय सरलगिरा दुरूहाणामपि न्यायपदार्थानां विवेचनपर एकः प्रबन्धो न्यबन्धि।

यः खलु,

दुर्बोधान्बहुलप्रकारजटिलान् नैयायिकानां वचो-
　　विन्यासान् गमयत्यलं झटिति तद्बोधं च सम्पादयन्।
प्रौढिं कामपि दर्शयत्यनुपमां शास्त्रे श्रमं निस्तुलं
　　श्रीमत्तार्किकपुङ्गवस्य सततं **कैलासचन्द्रात्मनः** ॥३४॥

शिरोमणिमहाशयस्य महोदाराशयता दीनेषु करुणा च काऽप्यपूर्वैवासीत्। अद्याऽपि सर्वे तं **'महाशय'** इति नाम्नैव स्मरन्ति।

पञ्चपञ्चाशद्वर्षात्मकाऽवस्थातः परं न कोऽपि राजकीयाधिकारं निर्वोढुं प्रभवतीति राजशासनानुरोधेन वार्द्धकसुलभाऽऽमयोपसर्गेण च शिरोमणिमहाशयेन स्वयमेव जिहासितेऽपि पाठशालीये पदे "अयं पाठशालाया विभूषणम्" इत्यवधार्य प्रधानाध्यक्षो महामना श्री**मद्वेनिस**साहिबमहोदयः महता निर्बन्धेनाऽमुं स्वपदकार्यं यथारुचि कर्तुमन्व-

रुन्ध । यथा चाऽस्य गमनागमनजनितः क्लेशोऽपि न विशेषेण भवे-त्तथाऽसौ प्रायतत । समयनिर्बन्धमपि महाशयकृते परिजहार । एव-मेव समतीतेषु कतिपयेषु वर्षेषु "**लार्ड कर्ज़न**" महोदयस्य तीक्ष्णा दृष्टिः शिरोमणिमहाशयस्योपरि पपात । अवसराऽप्रदाननिदानं च जिज्ञासितवानसौ । अथ तदादेशेन तदानीन्तनः संयुक्तप्रान्तप्रधानशा-सकः श्रीमान् "**लाटूश**" महोदयः स्वयमिह समागत्य समवलोक्य च प्रत्यक्षं शिरोमणिमहाशयं तस्य लोकोत्तरं वैदुष्यं, तत्सम्बन्धेन पाठशालायाश्च परमगौरवं सर्वजनैरविप्रतिपत्त्या प्रतिपादितं च निश-म्य सुतरां सन्तुष्ट एतदेव निरणैषीत् 'यदसौ महाशयो यावत्कालप-र्यन्तं पाठशालायामागन्तुमीष्टे तावदनेनागम्यताम्' इति ।

अथ सप्ताधिकैकोनविंशतितमे १९०७ ईशवीये वर्षे नियोगा-न्नियतेर्ज्येष्ठपुत्रस्य राजवल्लभभट्टाचार्यस्य, पौत्रस्य चैकस्याऽकालनिध-नेन समुद्विग्नचेता वीतस्पृहः शिरोमणिमहाशयो साग्रहमनुरुन्धानेऽप्यध्यक्षमहोदये तत्याज पदं जग्राह चाऽवसरम् ।

इत्थमनेन चतुरधिकचत्वारिंशद्वर्षाणि यावत् पाठशालायां सुर-भारती सेव्यते स्म ।

अथ गृहीतावसरोऽसौ जराजर्जरशरीरः प्रारब्धकर्मभोगं परिस-माप्य षडधिकसप्ततिवर्षवयाः प्रवयाः १८३० शके सौरचैत्रमासस्य तृतीयदिवसे सायं तत्याजेमां पाञ्चभौतिकीं विनश्वरतनुम् ।

व्योमाग्न्यष्टशशाङ्कसंमितशके चैत्रे तृतीये दिने
सायं भास्वति पश्चिमाम्बरतटादुच्चैः पतत्यम्बुधौ ।

विद्वद्वृन्दसरोजहासनपटुः **कैलासचन्द्रो** रविः
कुर्वन् भारतमात्तशोकतिमिरं हा हन्त ! सोऽस्तङ्गतः ॥ ३५॥

विद्वत्कोककुलं सशोकमभवत् दुःखान्धकारोच्चयः
सर्वत्रैव कृतास्पदः परपदं कैलासचन्द्रे गते ।
तर्कव्याकृतिकौशलं निरुपमं तत्प्रातिभोद्दङ्कनं
धर्मे सा दृढता च सर्वमगमत्तेनैव साकं किमु ॥ ३६ ॥

वङ्गेषु लब्धजन्मा शिवपुरि सम्प्राप्तभूरितरशर्मा ।
**कैलासचन्द्र**शर्मा जयति शिवात्मा स सत्कर्मा ॥ ३७ ॥

निधनसमये शिरोमणिमहाशयस्य मुकुन्दवल्लभाशुतोषसदानन्द-नित्यानन्दनामधेयाश्चत्वारस्तनया उमाशशीत्यभिधाना कन्यका चैका ऽऽसीत् । तेषु आशुतोषसदानन्दनित्यानन्दाः कन्यका चाद्याऽपि जीवन्तः स्वकुलगौरवं च यथावत्पालयन्त्येव ।

अथ शिरोमणिमहाशयानामसङ्ख्यातेषु भारतवर्षव्यापिषु छात्रेषु ये सविशेषं प्रसिद्धिभाजो ऽद्याऽपि सुरभारतीगौरवं रक्षन्ति तेषु कतिपयानां नामानि कीर्तयामः ।

श्रीमन्तो महामहोपाध्यायपदवीविभूषिता अशेषशास्त्राम्भोधिपारङ्गमाः पण्डितेन्द्राः कलिकाताराजकीयपाठशालाध्यापकचराः सम्प्रति विरचितवाराणसीवसतयः काशीविश्वविद्यालयीयप्राच्यविद्याशालाप्रधानाध्यक्षाः श्रीमत्**प्रमथनाथतर्कभूषण** महोदयाः शिष्या एव शिरोमणिमहाशयानाम् ।

विद्वद्वृन्दचकोरचन्द्ररुचयः षड्दर्शनीमार्मिकाः
साहित्येऽपि समृद्धबुद्धिविभवा वागीश्वरस्पर्द्धिनः ।

नानाग्रन्थविधानजन्यसुयशःसम्भारसम्भूषिताः

श्रीमन्तः **प्रमथादिनाथ**पदभृद्वर्या जयन्ति ध्रुवम् ॥३८॥

श्रीमन्तो नैयायिकाग्रेसराः स्तनन्धयसरलस्वभावाः स्वधर्मधूर्धराः काशीस्थराजकीयपाठशालायां प्रधानाध्यापकाः महामहोपाध्याय**श्रीवामाचरण** भट्टाचार्या अपि प्रधानाशिष्या एव शिरोमणिमहाशयानाम्—

विद्वन्मान्यतमा गृहीतवपुषो नूनं कणादर्षयः

शान्तस्वान्तजुषः स्मिताञ्चितमुखाम्भोजाः प्रसादोत्तराः ।

शिष्यौघैः परिवारिताः शिवपुरीभूषायमाणाः सदा

श्री**वामाचरणा**ख्यया सुविदिता राजन्ति विद्वत्तमाः ॥३९॥

श्रीमन्तो न्यायवेदान्तादिदर्शनवाचस्पतयः परोपकारव्रतिनो विद्वद्वरा महामहोपाध्याय**श्रीलक्ष्मणशास्त्रिद्राविड**महोदया अपि शिष्या एव शिरोमणिमहाशयानाम्—

पाण्डित्यं प्रचुरं सुविस्मयकरं बुद्धिश्च साऽलौकिकी

दीनानाथजनोपकारकरणे लोकोत्तरं कौशलम् ।

कीर्तिः शारदपार्वणेन्दुसदृशी लोकज्ञता चाऽद्भुता

श्रीम**ल्लक्ष्मणशास्त्रि**पण्डितवरेष्वालोक्यते सादरम् ॥ ४० ॥

श्रीमन्तः परिव्राजकाचार्याः प्रचण्डपाण्डित्यशालिनो वर्णाश्रमगुरवो गुरूपमाः **मनीष्यानन्द**स्वामिवरा अपि पूर्वाश्रमे शिष्यकोटिगता एव शिरोमणीनाम्—

प्राचीने बुधमण्डले कवलिते कालेन येऽद्याऽप्यहो

तामेवानुपमां बुधेन्द्रसरणिं रक्षन्ति दक्षात्मना ।

वाग्देवीसदनायमानरसना नैकैर्नृपैरर्चिताः
ख्याता हन्त जयन्ति मस्करि**मनीष्यानन्दतीर्था**भिधाः ॥ ४१ ॥

श्रीमन्तो महामहोपाध्यायाः कलिकाताराजकीयपाठशालाऽध्यापकचराः सम्प्रति कलिकाताविश्वविद्यालये संस्कृताध्यापका विद्वद्वराः **श्रीगुरुचरणतर्कदर्शनतीर्थ**शर्माणोऽपि शिष्यकोटिगता एव शिरोमणि महाशयानाम्—

गुरुवरचरणानां कल्पवृक्षोपमानां
विरचितबहुसेवोऽवाप्य विद्यां च सद्यः ।
विततविमलकीर्तिस्तर्कशास्त्रादितीर्थो
**गुरुचरण**सुनामा राजते पण्डितेन्द्रः ॥ ४२ ॥

काशीस्थ जंगमबाडीति प्रसिद्धवीरशैवसम्प्रदायमठमहापीठाऽभिषिक्तो जङ्गमानां गुरुः श्रीमान् **शिवलिङ्ग** स्वामिमहोदयोऽपि शिरोमणिमहाशयपादपद्मपरिचर्यावाप्तशेमुषीक एव—

भस्मोद्धूलनभासुरै रगणितै रुद्राक्षमालाधरै-
र्नित्यं शङ्करलिङ्गधारणभवत्तेजःप्रकर्षोदयैः ॥
शिष्यौघैः परिवारितो हुतभुजः शक्तेश्च संस्तम्भको
सिद्धेन्द्रः **शिवलिङ्ग** इत्यभिहितः स्वामी जयत्यद्भुतम् ॥ ४३ ॥

अन्येऽपि बहवो रङ्गलालशास्त्रितर्कतीर्थ, जानकीनाथतर्करत्न, आद्याचरणन्यायरत्न, हरिनाथवेदान्तवागीश, प्रभृतयः प्रभूतपाण्डित्याः शिरोमणिमहाशयानामन्तेवासिनः श्रूयन्ते । येषां साकल्येन वर्णनं वाक्पथातीतमेव ।

अथ ये च सम्प्रति परलोकगताः प्रसिद्धतमाश्छात्राः शिरोमणि-

महाशयानां, तेषु कतिपयानुल्लिखामः —

श्रीमान्महामहोपाध्यायो विद्वत्तमेषु विख्यातः ।
**आदित्यराम**भट्टाचार्यः शिष्येषु मुख्योऽभूत् ॥ ४४ ॥

श्रीमत्पण्डितराजराजितिलकः साहित्यसाम्राज्यधू-
र्धारी सत्कविमण्डलीकुमुदिनीराकासुधादीधितिः ।
विख्यातः शशिशुभ्रकीर्तिनिवहो योऽद्याऽपि कीर्त्यात्मना
भूमौ राजति **यादवेश्वरसुधीः** सत्तर्करत्नः कृती ॥४५॥

महामहोपाध्यायेति पदवीमनणीयसीम् ।
बिभ्रदेष यशोराशिरासीच्छिष्यः शिरोमणेः ॥ ४६ ॥

नैयायिकानां प्रथमो भविष्णुः
सम्भावितः पण्डितमण्डलेन ।
**सुरेन्द्रलाल**प्रथिताऽभिधानो
गोस्वामिवर्योऽल्पवया जगाम ॥ ४७ ॥

श्रीमान्महामहोपाध्यायो **विन्ध्येश्वरीप्रसादाख्यः** ।
पुस्तकनिलयाध्यक्षः शिष्यः कैलासचन्द्रस्य ॥ ४८ ॥

साहित्याकलनेन कोमलकलाकल्पा ऽपि यच्छेमुषी
वाचं व्याकुरुते स्म दार्शनिकतादर्शा सुगूढाशयाम् ।
यत्प्रौढिप्रथिमा प्रभूतसुषमासम्पादनो लक्षितः
कीर्तिर्यस्य विराजते शशिरुचिस्पर्द्धानिबद्धादरा ॥ ४९ ॥

श्रीमद्भागवताचार्यो **रामशास्त्री** विदां वरः ।
महामहोपाध्यायोऽयमासीच्छात्रः शिरोमणेः ॥ ५० ॥ इति ।

वेदाष्टाङ्कशशाङ्कसम्मिततमे संवत्सरे वैक्रमे
मासे फाल्गुनसंज्ञके शितिदले वारे रवेः शोभने ।
पुण्याहे शिवरात्रिपर्वणि मया **कैलासचन्द्रात्मनः**
शम्भोः सच्चरितं समापितमिदं तेनेश्वरः प्रीयताम् ॥ ५१ ॥

**श्रीगङ्गाधर**सद्गुरुप्रतिफलत्सारस्वतज्योतिषः
**श्रीरामा**ङ्घ्रिनिषेवणाप्तसुमतेः सन्तीर्णशास्त्राम्बुधेः ।
श्री**मद्भैरवनायका**त्मजनुषः सद्धर्मलक्ष्मीजुषः
**श्रीनारायणशर्मणः** कृतिरियं विद्वन्मुदे जायताम् ॥५२॥

इति श्री**खिस्ते**-इत्युपाख्य**नारायणशास्त्रिणा** प्रणीते **विद्वच्चरितपञ्चके** श्री**कैलासचन्द्रशिरोमणि**-चरितं नाम द्वितीयः परिच्छेदः ।





श्रीमन्महामहोपाध्याय श्रीदामोदरशास्त्री भारद्वाजः

जन्मसंवत् १९०४ मृत्युसंवत् १९६६

विद्यातपस्तीव्रतेजोनामिताशेषपण्डितः ।
दामोदरो विजयते हरिगम्भीरनिस्वनः ॥

॥ श्रीः ॥

# अथ श्रीदामोदरशास्त्रिचरितम् ।

अथ ब्रूमो ऽनुक्रमेण वादिनागहरेर्वयम् ।
**भारद्वाजस्य** चरितं **श्रीदामोदरशास्त्रिणः** ॥ १ ॥

आशां दण्डभृतो विहाय नगरीं विश्वेशितुः काशिका-
मायातेषु च दाक्षिणात्यविबुधेषूच्चैर्यशोराशिषु ।
**भारद्वाजकुलं** कलङ्करहिताखण्डेन्दुबिम्बोपमं
विख्यातं गुणगौरवेण विदुषां वृन्दे समभ्यर्च्यते ॥ २ ॥

विश्वामित्रकुलाब्धिकौस्तुभमणिः श्री**नीलकण्ठा**ऽभिधो
भट्टः पूज्यवरः स्वकीयतनयां सालङ्कृतां सादरम् ।
यद्वंशोद्भवमौक्तिकाय च **महादेवाय** देवश्रिये
न्यायाम्भोधिघटोद्भवाय विदुषे दत्त्वा मुदं प्राप्तवान् ॥ ३ ॥

तस्मादाविरभूत्प्रभूतगरिमा मानोन्नतस्तार्किको
मान्यः पण्डितमण्डले **दिनकरो** व्याख्यातमुक्तावलिः ।
भ्राता ऽन्यो ऽस्य **दिवाकरो** विरचितानेकप्रबन्धोच्चयो
साहित्ये ऽपि च धर्मशास्त्रविषये मातामहच्छायया ॥ ४ ॥

तत्सूनुर्निजतातपादरचनाव्याख्यानकृत्कौतुकात्
प्रायस्तत्समयप्रथामनुसरन् यो धर्मशास्त्राम्बुधिम् ।
निर्मथ्याऽर्जितसद्यशाः कृतिवरः **श्रीवैद्यनाथो**ऽभवत्
भट्टानां मतमक्षरानुसरणैर्येनोच्चकैः पालितम् ॥ ४ ॥

तस्मिन्नेव कुले ऽजनिष्ट विदुषामग्रेसरश्छान्दसो
मूर्तो वेद इवाऽऽदृतो ऽवनितले ऽनेकैर्नृपालैर्नुतः ।
**सीताराम** इति प्रथामुपगतः **खेची**महीवल्लभा-
ल्लेभे **श्रीबलभद्रसिंहनृ**पतेर्यो ग्राममेकं नवम् ॥ ५ ॥

एकविंशत्यधिकाष्टादशशततमे (१८२१) वैक्रमे वत्सरे '**जासी**' ति नामा ग्रामो ऽनेनैव वेदपारायणश्रवणप्रीतात् खेचीपतेः **श्रीबलभद्रसिंहनृ**पतेरवाप्तः । योऽद्याऽपि "**ग्वालियर**" प्रान्ते वर्त्तते । यं चाऽद्याऽपि तद्वंशीया उपभुञ्जते । इदमपरञ्च श्रूयते, यदनेनैव विदुषा वाराणस्यां श्रीमदन्नपूर्णामन्दिरस्य जीर्णोद्धारं कृत्वा पुनर्नवीकृतं तत् । तदानीन्तना अवशिष्टाः प्रस्तरखण्डाः पुत्तलिकाश्चाऽद्याऽपि तद्वंशीयानामन्तिके विलसन्ति । एकदाऽसौ विद्वद्वरः श्रीविश्वनाथालयमिव श्रीमदन्नपूर्णालयमपि हैमं निर्मित्सुस्तदौपयिकप्रभूतवित्तार्जनाय नानाविधानि नगराणि भ्राम्यन् अनेकेभ्यो भूपालेभ्यः प्रचुरं च धनमधिगम्य काशीं जिगमिषन् अध्वनि दस्युभिर्लुण्ठितो निहतश्च । अद्याऽपि तस्मिन् स्थाने ऽस्य समाधिस्तूप उपलक्ष्यते । दस्युभिरपि गृहीतवित्तैरेतदन्तिकवर्त्तीनि राजशासनपत्राणि आत्मनोऽनुपयुक्तानि परिभाव्य तद्देशपरिसरप्रवाहिणि सरिदुदके प्रक्षिप्तानि । नदीजले प्रवहन्ति तान्येव नियतिनियोगात् बघेलखण्डमण्डने रींवाराज्ये निवसन्त्याः स्नानार्थं नदीतीरमागतायाः श्री**सीताराम**भट्टस्य भगिन्या हस्ते पतितानि । तया चालोक्य विचार्य च मम भ्रातुरेवेमानीति निश्चित्य भृशं दुश्चिन्तातान्तया ऽभावि । कालान्तरे भ्रातुरध्वनि दस्युद्वारा प्राणापहरणं निशम्य तत्प्रसङ्गएव तेषां राजशासनपत्राणां दस्युगणकृतं नदीप्रक्षेपम-

वधार्य तया तानि सर्वाण्येव यथोपलब्धानि पत्राणि काश्यां निवसतो भ्रातृपुत्रस्यान्तिके प्रहितानि । स च सीतारामभट्टतनयो **हरिराम-भट्ट**नामाऽऽसीत् । यश्च वेदवेदाङ्गमर्मविदपि आयुर्वेदे लब्धसविशेष-ख्यातिरासीत् । औषधान्यपि रामबाणकल्पान्यस्य सविधे ऽभूवन्निति लोके प्रसिद्धिः । कथयन्ति च पुराविदो यदस्य महात्मनो गृहद्वारे बहवो राजानो महाराजाश्चौषधिलिप्सया सुचिरमवसरं प्रतीक्षमाणा अवातिष्ठन्त ।

नाऽयं कमपि रोगिणं द्रष्टुं तस्य गृहं गच्छति स्म । नाऽपि किमपि पारिश्रमिकं मूल्यं वा ततोऽपैक्षिष्ट । किन्तु धर्मार्थमेवौषधवितरण-मनेनाऽकारि यावज्जीवनम् । केचित्त्विदमपि कथयन्ति यदसौ न केवलं मनुष्याणामेव चिकित्सकोऽभूदपि तु पश्वादीनामपि ।

अस्य तनयः प्रथितविनयः समधीतनयो **भारद्वाज बाल-कृष्णशास्त्रीति** नाम्ना प्रसिद्धो बभूव । यश्च षड्दर्शनीमार्मिको वैयाकरणश्चाऽऽसीत् । येनाऽमुना निर्मिता शब्देन्दुशेखरस्य टीका स्वह-स्तलिखिता ऽद्याऽपि तद्वंश्यानां सन्निधौ निधिरिव निहिता निभाल्यते । भगवति शशाङ्कशेखरे नैसर्गिकप्रगाढभक्तिशालिनो ऽस्य निर्मितिरूपाणि नैकानि गणेशस्तोत्राण्यपि तद्वंश्यानामन्तिके सन्ति, यान्यालोच्याऽस्य सुकवित्वे बाढं विश्वसिमो वयम् । सुचिरं काशीमधिवसताऽनेन ग्वालियरप्रान्तीयराजलब्धग्रामस्य सुव्यवस्थासम्पादनं सुदूरतया दुःशकमाकलय्य सकुटुम्बेन तत्रैव निवासः कल्पितः ।

तत्रैव निवसतोऽस्य स्वोपास्यस्य शम्भोरनुग्रहात् पुमर्था इव, वेदा इव, सिन्धव इव, दिग्गजा इव महामहिमानश्चत्वारस्तनयाः समभूवन् ।

ज्येष्ठतनयो **'रामशास्त्री'** ति नाम्ना लब्धख्यातिरासीत् । यः खलु जन्मनैव जातिस्मर आसीत् । यस्य पुराभवस्मृतिरष्टमहायनं यावदक्षुण्णाऽऽसीत् । स्वयं दृष्टैतच्चमत्कारा अद्याऽपि कतिपये वर्षीयांसो ग्वालियरप्रान्तान्तर्गते **'आरोण'** ग्रामे विद्यन्ते । उपनयनानन्तरं पितुरेवाधीतसमस्तशब्दशास्त्रोऽयं समागत्य काशीं यावज्जीवनमत्रत्ये प्रसिद्धतमे **गोपालमन्दिरे** धर्मार्थं पारेसहस्रं विद्यार्थिनोऽध्यापयन्नेवाऽऽयुः समापितवान् ।

नानादेशसमागतैरगणितैर्विद्यार्थिवृन्दैर्वृत-
स्तेषां मध्यगतो बृहस्पतिसमो वर्षीश्रधीरस्वरः ।
भारद्वाजकुलाब्धिकौस्तुभमणिः **श्रीरामशास्त्रीति** यः
ख्यातोऽभूदिह कौमुदीमनुपमं सर्वाधिकं पाठयन् ।। ६ ।।

काशीस्थवल्लभकुलैकगुरुर्मनस्वी
साक्षादिवाऽसमशरो यशसा ऽवदातः ।
भूपोपमः प्रथित**जीवनलालशर्मा**-
चार्यो ऽप्यमुष्य किल शिष्यगणे ऽग्रण्यः ।। ७ ।।

द्वितीयः पुत्रः पण्डित**लक्ष्मणशास्त्रीति** विख्यातनामाऽऽसीत् । अयं च ज्यौतिषे धर्मशास्त्रेचाऽद्वितीय इवाऽऽसीत् ।

तृतीयपुत्र एव **पण्डितदामोदरशास्त्री** भारद्वाजः प्रकृतचरितनायकः—

चतुर्थपुत्रो **गोविन्दशास्त्रिभारद्वाजो** व्याकरणन्यायवेदान्तसाहित्यादिदर्शनेषु प्रगाढप्रौढपाण्डित्यो जगद्विख्यातो लब्धमहामहोपाध्यायपदवीकः कलिकाताराजकीयसंस्कृतपाठशालायामध्या-

पक आसीत् । एतन्निर्मितिषु परिभाषेन्दुशेखरस्य **लघुजटाजूटना**-मिका टीका विख्यातैवाऽस्ति ।

अथाऽस्माकं चरितनायकः **श्रीदामोदरशास्त्री** पुमर्थव्योमनिधिभू १९०४ सम्मिते वैक्रमेऽब्दे कार्तिकशुक्लनवम्यां **आरोण**-ग्रामे प्रादुरासीत् ।

प्राचीव बालतपनं हिमशैलराज-
　कन्येव दन्तिवदनं विबुधादिपूज्यम् ।
**श्रीबालकृष्ण**दयिता महिता सतीनां
　**दामोदरं** सुतवरं जनयाम्बभूव ॥ ८ ॥

दामोदरे भगवदंश इवावतीर्णे
　नैर्मल्यमापुरभितोऽपि दिशः समग्राः ।
वायुर्ववौ सुरभिरञ्चितशीतभावो
　दुर्वादिकंसहृदयं विकलं बभूव ॥ ९ ॥

इत्थं जगतः कल्याणाय गृहीतावतार इव भगवान् दामोदरो **दामोदरशास्त्री** ग्वालियरप्रान्तान्तर्वर्त्तिनि **आरोण**ग्रामे पितृभ्यां लाल्यमानो बालकेलीरनुभवन्नवात्सीत । तत्रैव निवसताऽनेनोपनयनोत्तरं पितुरेवान्तिके ऋग्वेदमंशतोऽधीत्य शास्त्रमभ्यस्यतैव तद्देशराजकीयव्यवहारविपुलप्रचारा मोडीलिपिरायव्ययगणितकार्यकौशलं च सममेवाऽसमं जगृहे । तदानीन्तनाः शास्त्रिमहोदयस्य सहाध्यायिनः कतिपये सम्प्रत्यपि ग्वालियरराज्ये दण्डाधिकरणेषु व्यवहारकार्येषु च नियुक्ताः सुखं जीवन्तो विद्यन्ते ।

तातेन पञ्चदशएव हायने कारितप्रथमोद्वाहस्तत्रैव सुखमवसत् ।

**बालकृष्णशास्त्रि**महाशयः स्वभावत एव विपुलकोप आसीत्। वार्द्धकेन च द्विगुणीकृतस्तत्कोपः साधारणेऽपि कारणे शुष्कतृणराशौ वैश्वानर इवाऽकस्मादेव प्रज्वलति स्म। प्रायो भार्यायां पुत्रेषु च कदाचित्क्वचित्कार्ये जायमाने वैमत्ये समुज्ज्वलत्क्रोधवह्निर्**बालकृष्णशास्त्री** तान् दण्डयन्निव गृहस्थितमखिलं धनधान्यजातं भिक्षुकेभ्यो वितरति स्म, कथयतिस्म च भार्यां पुत्रांश्च, नाऽहं युष्मदर्थे किमपि स्थापयामि, यूयं भिक्षामटतेति।

द्वाविंशत्यधिकैकोनाविंशतितमे (१९२२) वैक्रमेऽब्दे पूर्वोक्तैरेव हेतुभिः कदाचित्प्रवृत्ते गृहकलहे पितुर्व्यवहारेण भृशं क्लेशितो **रामशास्त्री** पिपठिषया वाराणसीं जिगमिषन् अनुजाभ्यां **दामोदरगोविन्दशास्त्रिभ्यां** भृशमनुरुध्यमानस्ताभ्यां सहैव भारतीविहारभूमिं वाराणसीं गन्तुमैहत। भावितनयविरहमसहमानया स्नेहमय्या जनन्या "कृतोद्वाहौ युवामिहैव क्वचिद्राजकार्ये वृत्तिमाश्रित्य सुखं निवसतम्" इति सानुरोधमभ्यर्थ्यमानावपि **रामशास्त्रिदामोदरशास्त्रिणौ** भविष्यदर्थगौरवादनुल्लङ्घनीयमपि तदनुरोधं पालयितुं न शेकतुः।

विहितदृढनिश्चया इमे त्रयो **रामदामोदरगोविन्दा** धृतविग्रहा इव प्रभावमन्त्रोत्साहा यदा वाराणसीं गन्तुकामाः स्वग्रामात्प्रातिष्ठन्त, तदा कुपितेन जनकेन श्रीमता **बालकृष्णशास्त्रिणा** पाथेयमपि न किमपि तेभ्यो ऽदीयत। अवलोक्यैतद् भृशमुद्विग्नया ऽश्रुमुख्या सहजस्नेहार्द्रया तज्जनन्या निजशिरोऽलङ्काररूपं एकं हैमपुष्पं तेभ्यो दत्तमुक्तं च, विक्रीयैतदधिगतद्रव्येण कथंचित् सम्पाद्यतां मार्गव्ययो भवद्भिरिति।

अथ क्रमेण चतुर्विंशाष्टादशचतुर्दशवयस्का इमे **रामशास्त्रि दामोदरशास्त्रिगोविन्दशास्त्रिणस्तेन** मातुर्हैमपुष्पेण विक्रीतेनाऽधिगतात् दशरूप्यकपरिमितात् द्रव्यादेव सहायभूतात् कथं कथमपि कतिपयैरहोभिरतिक्रम्य सुदूरमध्वानं परिपाकोन्मुखसुकृतततिमहिम्नैव चिराभिलषितां भगवतः शूलिनो मोक्षराजधानीं वाराणसीमासेदिरे ।

या च,

संसारोद्दामदावानलबहलशिखादह्यमानान्तराणां

नृणामेका शरण्या तृणमिव मनुते स्वर्गसाम्राज्यलक्ष्मीम् ।

सन्तापक्लान्तिदूरीकरणपटुतरस्वर्णदीनीरपूरै-

राकण्ठं पीयमानैर्मनसि जनयते तुच्छभावं सुधायाम् ॥१० ॥

यस्यां च,

देवी सा ऽखिलवाङ्मयात्मकवपुर्वीणाङ्कपाण्यम्बुजा

सन्त्यज्य स्थविरं सदा श्रुतिरतं रुष्टेव देवं विधिम् ।

स्वोपास्त्येकपरान्तरानगणितानासाद्य विद्वत्तमान्

तेषां कण्ठमकुण्ठमाश्रितवती यत्रैव विश्राम्यति ॥ ११ ॥

लक्ष्मीर्वीक्ष्य सरस्वतीं स्थितिमतीमित्थं विदामानने

पद्मं सद्म निजं विहाय मुरभिद्वक्षो ऽप्यसंलक्ष्य च ।

सम्प्राप्ता ऽत्र बुधाङ्गणेषु वसतिं सम्प्रार्थयन्ती पुन-

र्दूरात्तैर्विनिवारिता श्रयति हा तद्दाससद्मान्यसौ ॥ १२ ॥

इत्थंविधां सकलविचक्षणमौलिमण्डनायमानपण्डिताखण्डैरलङ्कृतां भगवतीं वाराणसीमासाद्य सद्यः समुपजातमनस्तोषा इमे त्रयः

पुरुषव्याघ्राः स्वकीय एव मातामहकुलाऽधिगते सद्मनि सुखं न्यवसन्। **रामशास्त्री** तु ततः परं अनुजयोर्विद्याभ्याससौकर्यसम्पादनायाऽऽत्मनः क्लेशानगणयित्वा भूरिपरिश्रमैरितस्ततो भ्राम्यन् कुतश्चिदपि त्रयाणां भरणपर्याप्तं आमान्नं मासि मासि लभते स्म।

ततो द्वावपि **दामोदरगोविन्दा**वनुजावादाय श्रीमान् **रामशास्त्रिवरः** तात्कालिककाशिकपण्डितमूर्धन्यं कलिकालप्रभावप्रबलाऽधर्मदूरीकरणायाऽवतीर्णमिव धर्मराजं चतुराशाऽवकाशकुक्षिंभरिकमनीययशोराशिं द्वितीयमिव गीष्पतिं अचतुराननमिव विधातारं श्रौतस्मार्तकर्मानुष्ठाननैष्ठिकं श्रीमन्तं **रानडोपाख्यं श्रीबालशास्त्रिणं** द्रष्टुं तदावासभवनमगमत्। तत्राऽवसरं प्रतीक्षमाणः पुण्यमूर्तेर्महापुरुषस्य तस्य दर्शनमधिगम्य निजचक्षुषोः साफल्यमाकलयन् निवेदितनिजाऽखिलोदन्तः शान्तचेता अनुजद्वयं तदीयचरणयोः समर्प्य प्राञ्जलिराचष्ट च—

'महात्मन्! इमौ मम पुत्रकल्पावनुजावद्यप्रभृति श्रीमच्चरणकल्पतरुप्रच्छायशीतलं तलमुपागतौ भगवतैव सर्वात्मना विनेयौ पालनीयौ' चेति। महामनाः श्रीमान् **बालशास्त्रिवरो**ऽपि तयोः सुलक्षणपूर्णतया शोभनायतिमत्तां सम्भावयन् विशेषतो गुणमन्दिरे **दामोदरे** समाकृष्टचेता अध्यापनमुररीकृतवान्। इत्थमष्टादशहायनावस्थेन **दामोदरेण** गीर्वाणगीर्देवतामन्दिरे प्रवेशः कृतः। ततः परमसौ दारिद्र्यदुरवस्थाजनितक्लेशजातमवधूय यथाकथञ्चिल्लब्धैरन्नवस्त्रैः सम्पादितदेहव्यापारः सर्वात्मना सरस्वत्याराधनैकप्रवणचेता बुद्धिमतामग्रेसरो **दामोदरो** गुरुचरणाऽन्तिके ऽधीयानः सुप्रसन्नैर्गुरुवरै-

रध्यापितसकलविद्यारहस्यः कियतैव कालेन पदवाक्यप्रमाणपारावार-पारीणो बभूव ।

इत्थं सद्गुरु**बालशास्त्रि**चरणाम्भोजप्रसादोदया-
दासाद्याऽखिलशास्त्रजातमुदयत्सारस्वतौजाश्चिरम् ।
प्रीतैः श्रीगुरुभिः शिरोविनिहितश्रेयोऽङ्कपाण्यम्बुजः
श्रीमान् मानिजनाग्रणीरधिकधी**र्दामोदरो** दिद्युते ॥१३॥

श्रीमान् पतञ्जलिरयं पुनरागतः किं
पर्याय एव किमु भर्तृहरेरयं वा ।
यद्वैदुषीसमवलोकनविस्मिताना-
मित्थं विकल्पततयो मुहुराविरासन् ॥ १४ ॥

अथैष गुरोरादेशमासाद्य स्वसद्मनि समागतानपरिमितान् विद्यार्थिनः प्रत्यहं सर्वशास्त्राणि सविशेषेण च व्याकरणमध्यापयन् अल्पीयसैव कालेन सर्वतः प्रसृमरसुयशाः पण्डितमण्डले ऽसाधारणीं ख्यातिमलभत ।

प्रतिदिनं प्रातःकाले महीसुरगुरोर्गृहीतावतारस्येव भगवतो विरिञ्चेः श्रीमतो **बालशास्त्रिणः** सविधे दर्शनानि समधीयानो नितान्तसन्तोषितेन तेन सुचिरमननोद्धृतानि शास्त्ररहस्यानि निर्व्याजमध्यापितः स्वकीयप्रतिभाविशेषमहिम्ना तानि सद्यः स्वायत्तीकुर्वाणो गुरुचरणादेशेन तदन्तिकागतान् असङ्ख्यान् मैथिलान् विद्यार्थिनः स्वसद्मनि मध्याह्नोत्तरमध्यापयामास ।

द्वारवङ्गस्थः पण्डित**विश्वेश्वर झा, बच्चू झा, मनहरन झा, रघुवर झा,** पाटलिपुत्रस्थ**हरिवंश झा,** नैपालस्थ

**काली झा** प्रभृतयः स्वस्य विद्यार्थितादशायामेव सयत्नमध्यापिताः श्रीमता **दामोदरशास्त्रिणा** ।

वाग्देवताया निरन्तरोपासनानुरक्तान्तरेणाऽमुना प्रायो नक्तन्दिनं तथा विभाजितमासीत् यथाऽस्य परमावश्यकदैहिकव्यापारब्राह्मणोचिताह्निकक्रियाकलापवर्जं सर्वोऽपि समयोऽध्ययनाध्यापनक्रियास्वेवाऽत्यवाह्यत ।

नाऽयं केलिषु कुत्रचित्सवयसां वर्गे स्थितो जातुचित्
काश्यां नित्यमुदित्वरेषु बहुधा यात्रोत्सवादिष्वपि ।
शास्त्राभ्यासरतः सदैव बहुलैश्छात्रैर्वृतः केवलं
शास्त्रीयां कथयन्कथामनुपमां कालं सुखेनाऽनयत् ॥ १५ ॥

श्रीमत्काशिकराजकीयसुरगीःपाठालयाधीश्वरै-
र्मान्यैः **श्रीग्रिफिथा**भिधप्रभुवरैर्दत्तप्रशंसादलः ।
लब्ध्वा द्वादशमुद्रिकापरिमितं सर्वोत्तरं मासिकं
तेनैवाऽऽतनुते स्म निःस्पृहमना वृत्तिं कथञ्चिन्निजाम् ॥ १६ ॥

**रामशास्त्री** त्वगणयन्नात्मनः क्लेशमप्यलम् ।
गृहकार्यं स्वयं चक्रे ऽनुजाध्यापनतत्परः ॥ १७ ॥

अत्रान्तरे ऽशनिपातदारुणं स्वग्रामे मातुर्देहपातं निशम्य प्रभूतशोकसन्तप्तचेतसो ऽप्यमी भ्रातरोऽध्ययनप्रत्यूहपरिजिहीर्षया स्वग्रामं गन्तुं नाऽपारयन् ।

अथ दयिताविरहविधुरेण तनयानामार्थिकीमवस्थामविचारयता तातेन श्रीमता **बालकृष्णशास्त्रिणा रामशास्त्रिदामोदरशास्त्रिणो**र्भार्ये अपि काश्यां तयोरन्तिकं प्रेषिते । तयोरागमनेन समे-

धमानगार्हस्थ्यव्ययया इमे भृशं चिक्लिशुः। **रामशास्त्री** तु येन केनाप्युपायेन गार्हस्थ्यार्णवकर्णधारतामवलम्ब्य गार्हस्थ्यचिन्ता यथाऽनुजौ न बाधेत तथैव बाढं प्रयतते स्म। नैतावताऽपि दुरदृष्टं परितुष्टं बभूव, काश्यागमनादनु मासद्वयान्तर एव **दामोदरशास्त्रिणः** प्रथमा पत्नी 'छिद्रेष्वनर्था बहुलीभवन्तीति'' लोकोक्तिं चरितार्थयन्तीव सतीलोकं जगाम ।

अथ मध्यमेन भ्रात्रा श्रीमता **लक्ष्मणशास्त्रिणा** प्रहितात्पत्रात् जनकस्य वार्द्धकसुलभामयोपसर्गेण शय्याशायितां जीवितसन्देहं चाऽवगम्य **श्रीरामशास्त्रिदामोदरशास्त्रिणौ** पितरं द्रष्टुं सति सम्भवे तं च काशीमानेतुं स्वग्रामं प्राऽतिष्ठेताम् । दारिद्र्यदुर्गतयोरनयोः परिच्छदोऽपि दुर्गत्यनुरूप एवाऽऽसीदिति मनसि प्राज्यलज्जाञ्चितावेतावनुपायतया तथैवाऽगच्छताम् ।

मध्येमार्गं **गोपाचल (ग्वालियर)** राजधानीमासेदतुः ।

या च,

अद्रिप्राकारदुर्द्धर्षा वाहिनीपरिखाञ्चिता ।
निसर्गादिव गुप्ताऽभूदाखण्डलपुरी यथा ॥ १८ ॥

यां च,

प्रौढप्राज्यप्रतापानलबहलशिखाप्लुष्टवैरीन्धनौघो
गोविप्रप्राणरक्षाऽशरणजनभयत्राणकर्मप्रवीणः ।
विद्वत्सार्थाऽमरद्रुः सकलगुणिजनैकाश्रयः कीर्तिशाली
राजेन्द्रः **श्रीजयाजी**प्रथितनरपतिः पालयामास दोर्भ्याम्॥१९॥

यत्पूर्वजैः प्रचुरशौर्यमयैरमायैः
सङ्ग्रामसीम्नि परिदर्शितसिंहभावैः ।

श्रीपेशवानरपतेः समवापि राज्यं
गोपाचलस्य धनधान्यसमृद्धिपूर्णम् ॥ २० ॥

इत्थंविधां **लश्करापराभिधानां ग्वालियराभिख्यां गोपाचलराजधानीमुपागत्य** विद्वत्कुमुदिनीनिशाकरो **दामोदरो** धरासुरगुरोः **श्रीबालशास्त्रिणः** समधिगतामनुपमामात्मनः सुवर्णमयीं विद्यां **गोपाचल**निकषोपले परीक्षितुमिच्छन्निव न्यायवेदान्तशब्दखण्डादिनिष्णातान् राजाश्रितान् **श्रीगोपालाचार्यप्रभृतीन्** तत्रत्यान् पण्डितान् वादकथायै निर्भयं समाजुहाव । राजाश्रयप्रचुरप्रतिष्ठा विकटाभिमाना असहमानास्ते ऽपि साग्रहं समाजग्मुः । समारब्धः शास्त्रार्थः । प्रखरप्रतिभाशालिना **श्रीदामोदरशास्त्रिणा** सह दिनानि त्रीणि यावत्तैः शास्त्रचर्चा व्यतन्यत । पराजिताश्च ते सर्वेऽपि । सर्वतः साधुवादाः प्रशंसोद्गाराश्च पुष्पवृष्टय इव श्रीमति **दामोदरशास्त्रिणि** पतन्ति स्म ।

श्रीगोपाचलकन्दरोदरशयान् वादीन्द्रपञ्चाननान्
सद्युक्तिप्रतिभाशरैरतिशितै र्विद्राव्य सद्यः सुधीः ।
तत्रत्यैरखिलैर्बुधै'रनुपमो विद्वानसौ' घोषितो
भूपस्याऽपि बभूव चेतसि कृतस्थानोऽथ **दामोदरः** ॥ २१ ॥

श्री**मज्जयाजि**नरपालनिदेशतोऽथ
प्रोद्यत्कुथास्तरणकां शिबिकां नवीनाम् ।
आरोपितः सकलपण्डितचक्रवर्त्ती
**दामोदरो** नृपसभां बहुभां स निन्ये ॥ २२ ॥

आसाद्य भूमिपसभामवतीर्य याना-
त्तत्राधिकारिपुरुषैः प्रणतैः समेतः ।
सिंहासने स्थितमुदित्वरभास्कराभं
श्रीमज्जयाजिनरपालमसौ ददर्श ॥ २३ ॥

भूपोऽपि मूर्तमिव देवगुरुं बुधेन्द्र-
मेनं निरीक्ष्य विपुलोज्ज्वलकान्तिमन्तम् ।
प्रत्युद्गतस्त्रिचतुराणि पदानि सद्यो
नत्वा निजासनसमीपमवेशयच्च ॥ २४ ॥

सम्मानपूर्वकमथ क्षितिपालमौलि-
राभाष्य किञ्चिदुदयत्स्मितशोभिताऽऽस्यः ।
हेमाङ्कराङ्कवमहांशुकमर्पयित्वा
पादान्तिकेऽस्य निदधेऽर्धसहस्रमुद्राः ॥ २५ ॥

अथैष राजसम्मानसम्पादनसञ्जातप्रमोदमेदुरान्तरः पूर्वसङ्कल्पानुसारेण सहाऽग्रजेन पितृचरणदर्शनसोत्कण्ठचेतास्तदावासं स्वजन्मग्रामं जगाम । तत्र पूर्वमेव कर्णाकर्णिकयाऽऽकर्णितनिजतनयविजयवृत्तान्तोऽपि **बालकृष्णशास्त्री** सर्वथाऽसम्भाव्यमेवेदमाकलयन्नश्रद्दधान एवाऽऽसीत् । **दामोदरस्तु** पितरं साष्टाङ्गं प्रणम्य महीपतेर्लब्धं तद्राङ्कवमंशुकमर्धसहस्रमुद्राश्च पितुश्चरणयोः सविधे सविनयं निदधे । **रामशास्त्री** च सप्रमोदमेतदीयं विजयवृत्तं राजसम्मानप्रकारं च सविस्तरं जगाद ।

अथ श्रुत्वैतमात्मजविजयवृत्तं काष्ठातिगानन्दसन्दोहतुन्दिलान्तरो **बालकृष्णशास्त्री** सुप्रसन्नस्तनयं **दामोदरं** समाश्लिष्य मूर्धान-

मस्य समाजिघ्रति स्म, प्रशशंस चैनं **रामशास्त्रिणं** च सविशेषम्। अथ **रामशास्त्रिणाऽभ्यर्थितो बालकृष्णशास्त्री** सह सपत्नीकेन द्वितीयात्मजेन **लक्ष्मणशास्त्रिणा** सहैताभ्यां **रामदामोदराभ्यां** काशिकामाजगाम।

उपेत्य काशीं जराजर्जरो **बालकृष्णशास्त्री** सर्वानप्यात्मजान् सुस्थितानवेक्ष्य तस्मिन्नेवाऽब्दे परित्यज्य पार्थिवं वपुः शिवसायुज्यमाससाद।

अथेमे चत्वारो भ्रातरो रामलक्ष्मणभरतशत्रुघ्ना इव परस्परमव्याजं सौभ्रात्रं वहन्तः सुखेन कालं यापयामासुः।

शास्त्रिवरस्य गुरुभक्तिः सर्वातिशयिनी प्रसिद्धैवासीत्। प्रतिनिशं स्वकरेण श्रीगुरोः शय्यायाः प्रसारणं, तत्र सुखं शयाने श्रीगुरौ नियमेन तत्पादसंवाहनं चाऽस्य दैनन्दिनं कार्यमासीत्। यदा यदा सद्गुरवः श्रीमन्तो **बालशास्त्रिणः** स्वशिष्यभूतानेकमहीपतिभिः सबहुमानमाहूताः कार्यविशेषवशेन तत्तद्देशविशेषं गच्छन्ति स्म, तदा तदा प्रभूतश्रद्धः शिष्येषु **दामोदर** एव प्रायस्तैः सार्धमनीयत। अयं च पथि गुरुचरणांस्तथा सेवते स्म यथा ते स्वात्मानं सुखेन स्वगृहगतमिव मन्यन्ते स्म।

आहिताग्नेर्याज्ञिकस्य श्रीगुरोरनुष्ठानसौष्ठवसम्पादनाय प्रायः प्रत्यनध्यायं **दामोदरशास्त्री** कतिपयैः स्वीयैश्छात्रैः सह नगराद्बहिर्वनेषु गत्वा प्रभूतान्कुशसमिदादीनाहृत्य तद्भारं स्वमस्तके शिष्यमस्तके चारोप्य गुरुगृहमानयति स्म। सहजस्नेहवात्सल्यपारावारः पण्डिताखण्डलो **बालशास्त्रिवरोऽपि** सुजाते **दामोदरे** सुता-

धिकं स्नेहमावहन् भारमुग्न शिरसमेनं तथाविधैः शिष्यैः परिवृतमालोक्य सकौतुकमेनं ऋष्यमूकसेनापतिमिति, तदीयशिष्यवर्गं च ऋष्यमूकसेनामिति व्यपदिशति स्म ।

अथाऽस्य पण्डितेन्द्रस्य प्रचण्डपाण्डित्यसमुद्भूतविमलविपुलयशःसौरभसमाकृष्टस्तात्कालिककाशिकराजकीयपाठालयप्रधानाध्यक्षः श्रीमान् **नेसफील्ड**साहिबमहोदयः सबहुमानमेनं अङ्काश्ववसुचन्द्रमिते १८७९ खीस्ताब्दे काशिकराजकीयपाठालये व्याकरणदर्शनाध्यापकपदे न्ययुङ्क्त । अथाऽस्य पुण्यमूर्तेः सम्बन्धेन सा काशिकराजकीयपाठशाला वैकुण्ठश्रियं श्रयति स्म ।

मिथ्यादृष्टिसरीसृपोक्तिगरलत्रासप्रहाणोद्यतै-
युक्ता पण्डितपुङ्गवैरगणितै र्या वैनतेयोपमैः ।
क्षीराब्धेस्तनयाऽपि यत्र विनयेनैव स्थिता सादरं
वैकुण्ठस्य बभार सा ऽद्य सुरगीःशाला विशालां श्रियम् ॥२६॥

विद्वद्वृन्दचकोरचन्द्ररुचिमान् दुर्वादिदैत्यव्रजै-
राभुग्नां पृथिवीं स्वपौरुषबलादुद्धर्तुकामः सुधीः ।
सद्विद्यात्मसुदर्शनेन महितो विश्वस्य चानन्दक-
स्तत्रासौ शुशुभे समेधितमहा **दामोदरो** निर्दरः ॥२७॥

अथ राजकीयपाठालये नियोगात् सुस्थितिमवाप्य प्रभूतोत्साहोऽसौ शास्त्रिवरोऽसङ्ख्यान् विद्यार्थिनः प्रत्यहं नानाविधानि शास्त्राणि पाठयन् सविशेषं च व्याकरणं सर्वतः प्रसृमरशरदिन्दुधवलसुयशःस्तोमधवलितदशदिङ्मुखः सुखमुवास । एतदध्यापिताश्चासङ्ख्याता

अन्तेवासिनो भारतवर्षे प्रायः सर्वत्रैव विद्यन्ते, तेषु विशिष्टान् कतिपयान् परिशिष्टे कीर्तयिष्यामः ।

अशेषशास्त्राम्भोधिपारङ्गतस्याऽप्यस्य व्याकरणविषये काऽप्यसाधारणी ख्यातिरासीत् । व्याकरणे न तथाविधः कोऽपि पूर्वपक्षोऽभूत् यस्योत्तरममुना न सद्यो दीयते स्म । पतञ्जलिमेव, नागेशभट्टमेव वा पुनर्गृहीतवपुषमिमं बाढं मन्यन्ते स्म पाण्डिताः ।

उर्वीभृच्छिखरोपरि स्थित इव क्रुद्धो नु कण्ठीरवः
किं वाऽसौ प्रलयक्षणोदितबृहद्वर्ष्मेव धाराधरः ।
उच्चैर्गर्ज्जति कम्पयन्निव महीमित्येव धीरस्वनं
दृष्ट्वा यं किल पाठयन्तमभवाच्चित्ते वितर्कोदयः ॥ २८ ॥

शास्त्रार्थसभासु च तात्कालिककाशिकपण्डितमण्डलेऽसाधारणी ख्यातिरासीच्छास्त्रिमहोदयस्य । "सभासिंह" इत्येवाऽस्य बिरुदं पण्डितमण्डले प्रथितं बभूव । मानोन्नतस्य विपश्चिदपश्चिमस्याऽस्य स्वप्नेऽपि पराजयो न शङ्कनीय आसीत् । प्रबलानामपि वादिनामस्य पुरतः कुण्ठितेवाऽभूद्भारती ।

षडष्टाष्टैकमिते १८८६ ईशवीये वर्षे **राघोपुराख्यनगरे** केनाऽपि महानुभावेन स्वगृहे यज्ञोपवीताऽवसरे सबहुमानमाहूतः श्रीमान् **दामोदरशास्त्री** तत्र प्रययौ । अथ तत्र नानादेशागतविद्वत्परिषन्मध्ये विद्वत्कुलाग्रसरेण श्रीमता **ऋद्धीझा**शर्मणा विदुषा सह शास्त्रिमहोदयस्य शास्त्रार्थविचारः प्राऽवर्त्तत । श्रीमान् पण्डितः **परमेश्वरओझा** शर्मा माध्यस्थ्यं जग्राह । अथ सुचिरं शास्त्रविचार-

विनोदानन्तरं पर्यवसाने श्रीमान् **ऋद्धीझाशर्मा** पराजयं भेजे । शास्त्रिणश्च भूयसी प्रतिष्ठा समजनिष्ट ।

अथ श्रीमत्पण्डित**ऋद्धीझाशर्मणः** शिष्यः प्रचण्डपाण्डित्यशाली वादिदन्तिपञ्चाननो नैकविधनिबन्धनिर्माता **धर्मदत्ताऽपराऽभिधानः** श्रीमान् **'बच्चाझा'**इति प्रसिद्धाभिख्यः पण्डितः स्वगुरोः पराभवमसहमानः क्रुद्धो ज्वलन्निव रुषा निधिवसुवसुचन्द्रमिते १८८९ ख्रीस्ताब्दे काशीमुपेत्य वादकथायै श्रीमन्तं शास्त्रिवरं समाजुहाव ।

वैदुषीवीराग्रणीः शास्त्रिवरोऽपि वादकण्डूलमुखं प्रचण्डपाण्डित्यं प्रतिवादिनमासाद्य प्रगुणोत्साहः सद्यो वादकथायै सन्नद्धो बभूव ।

श्रीमता पण्डितेन्द्रेण **'बच्चाझा'** शर्मणा व्युत्पत्तिवादे पूर्वपक्ष उपन्यस्तः । श्रीमान् शास्त्रिवरोऽपि सद्य एवोत्तरं ददौ । एवं क्रमेण समारब्धः शास्त्रार्थः । इत्थं मिथो विवदमानयोः सिंहयोरिवानयोः शास्त्रार्थविचारश्रवणकौतूहलेन प्रायः काशिकाः सर्वेऽपि पण्डितास्तत्र समाजग्मुः । मैथिलपण्डितानां प्रायः सप्तशती तत्र समुपस्थिताऽऽसीत् । विचारसमयोऽपि मध्याह्नोत्तरं द्विवादनात्परं षड्वादनपर्यन्तं निर्द्धारित आसीत् । श्रीमन्तो महामहोपाध्यायाः पण्डिताखण्डलाः **श्रीकैलासचन्द्रशिरोमणि, श्रीगङ्गाधरशास्त्रि, श्रीशिवकुमारशास्त्रि**प्रभृतयो मध्यस्था अभूवन् ।

इत्थं त्रीण्यहानि निर्दिष्टे समये शास्त्रार्थविचारो महता सन्नाहेन बभूव । सर्वत एव प्रसृताऽऽसीदियं कथा, 'यदुभावपि समानबलौ सिंहौ मिथोऽभियुक्तौ, दुःशकमिदं वक्तुं यदन्यतरस्य जयः पराजयो वा भवेत्' इति । प्रत्यहं दर्शकजनसम्मर्दोऽपि ववृधे । मध्यस्थानां

सुव्यवस्थासम्पादनकौशलेन सुमहानपि स जनसमाजः चित्रलिखित इवाऽऽसीत् । अथ तृतीयेऽहनि तुरीये यामे श्रीमतो **धर्मदत्ता**-पराख्यस्य **बच्चाझा**शर्मणः सरस्वती शिथिलक्रमा समजनिष्ट । विहाय शास्त्रीयं क्रमं प्राकृतमनर्गलं क्रमं जग्राह । विलोक्येदं मध्य-स्थैः श्री**मच्छिवकुमारशास्त्रिप्रभृतिभिः** पण्डितधौरेयैः श्रीम-च्छास्त्रिवरस्यैव कोटिः प्रबलेति निरणायि । गुणग्रहिलचेताः श्रीमान् **बच्चाझा**पण्डितोऽपि निर्व्याजमूचिवान् यत 'नास्ति भूमण्डलेऽन्यः **श्रीदामोदरशास्त्रि**सदृशः पण्डितः' इति । आसेतुशीताचलं म-हती ख्यातिरभूत् श्रीमतः शास्त्रिमहोदयस्य । विविधेभ्यो देशेभ्यो विविधाः पण्डिताः केवलं श्रीमतो **दामोदरशास्त्रिणो** दर्शनमेव समीहमानाः काशिकामाजग्मुः ।

काशीगौरवमित्थमुन्नतिमहाशैलाग्रमारोपयन्
विद्वत्संसदि गीष्पतेः सदृशतामासाद्य विद्वत्तमः ।
राकाशारदशर्वरीशसुपमां कीर्तिं वितत्याऽभितो
भारद्वाजकुलाब्धिकौस्तुभमणी रेजेऽथ **दामोदरः** ॥२९॥

अथैकदा द्वारकापीठाधिपशृङ्गगिरिपीठाधिपशङ्कराचार्ययोर्मिथः क-लहे प्रवृत्ते तन्निवारणायाहूतः श्रीमान् शास्त्रिवरः (सुरत)सूर्यपुरं गत्वा तत्राष्टौ दिनानि यावत् प्रतिवादिभिः सह शास्त्रविचारं विधाय तान् पराजयते स्म ।

एवमेव पश्चिमस्यां दिशि मण्डीनरेन्द्रेण सबहुमानमाहूतः शा-स्त्रिवरस्तत्र गत्वा राजसभायामनेकान् विदुषः शास्त्रविचारे पराजितवान् ।

१९०० ईशवीये वर्षे फतेपुरहसुवानामके नगरे केनाऽपि

दण्डिना सह श्रीमतः शास्त्रिमहोदयस्य चत्वारि दिनानि यावच्छास्त्रार्थविचारः समभवत् । पञ्चमे ऽहनि शास्त्रार्थसभायां दण्डिनमनुपस्थितं दृष्ट्वा मध्यस्थैः शास्त्रिवरस्यैव विजय उद्घोषितः । निशम्येदं वृत्तमसहमानः स दुरात्मा दण्डी शास्त्रिवरे ऽभिचारमाचचार । तत्प्रभावेणैकविंशतिदिनानि यावत् प्रबलां मूर्च्छां भजति स्म शास्त्रिवरः । आयुर्वेदमार्तण्डस्य श्रीमतो **ऽर्जुनमिश्रवैद्यस्य** रामबाणकल्पैरौषधिप्रयोगै द्वाविंशे लब्धचेतनो ऽयमस्तोन्मुखो ऽपि भारतमार्तण्डो भूयः स्वतेजसा वाराणसीं प्रकाशयामास । ततः परं सुहृदामनुरोधेन शास्त्रार्थसभासु नाऽयं पुरेवाऽग्रेसरत्वं गृह्णाति स्म ।

शास्त्रिवरस्य सर्वाऽतिशायिनी स्वधर्मे प्रगाढा भक्तिरनुष्ठाननैष्ठिकता च नितान्तं स्पृहणीया लोकोत्तरैवाऽऽसीत् । प्रतिनिशं प्रायो द्विवादनोत्तरमेव लब्धप्रबोध शास्त्रिवरः प्रातःस्मरणादिपुरःसरं नियमेन मणिकर्णिकातीर्थे स्नात्वा तत्रैव द्वादशशतं गायत्रीं जप्त्वा श्रीमत्याः **सङ्कटादेव्याः** प्रथमपूजां विधाय भगवत्याश्चरणसन्निधौ दुर्गासप्तशतीं च जप्त्वा यथासमयं पाठशालायामुपतिष्ठते स्म । दशवादनोत्तरं ततो गृहं प्रत्यागत्य माध्याह्निकं कर्म समाप्य भोजनोत्तरं मुहूर्तद्वयं रामायणमहाभारतादिग्रन्थाननुशील्य एकवादनतः पञ्चवादनपर्यन्तं शिष्यवर्गानध्याप्य निलयोन्मुखे भगवति सवितरि सायं सन्ध्यां विधाय प्रहरमात्रं इष्टमन्त्रजपं कृत्वा नववादनसमये निशि लघुमाहारं विधाय निद्राति स्म । आमरणमविच्छेदेन परिपालितोऽयं नियमः शास्त्रिमहोदयेन ।

**श्रीमत्सङ्कटादेव्यां** च प्रगाढा ऽस्य भक्तिः सर्वजनविश्रुते-

वाऽऽसीत् । तत्प्रसादोपनतमेवाऽस्याऽलौकिकं पाण्डित्यं भास्करोपमं च तेजः सभासु शार्दूलविक्रीडितं चासीदिति मन्यामहे ।

उद्यद्बालपतङ्गकोटिविलसत्कान्तिस्तृतीयेक्षण-
स्फूर्जद्वह्निशिखोज्ज्वला ऽलिकलसद्बालेन्दुमुग्धानना ।
मालाशङ्खकपाललालितदशोदग्रोच्चदोर्मण्डिता
काश्यां राजति सा ऽऽदिशक्तिरतुला **श्रीसङ्कटा** विश्रुता ॥ ३० ॥

दैत्येन्द्रस्य निधाय वक्षसि पदं विद्योतमाना स्फुर-
द्विद्युद्वृन्दमयीव, मङ्गलमयीं भक्ते क्षिपन्ती दृशम् ।
साष्टाङ्गप्रणमन्महेन्द्रमुकुटप्रत्युप्तगारुत्मत-
ज्योतिर्विच्छुरिताङ्घ्रिपद्मसुषमा वामा पुरारेरियम् ॥ ३१ ॥

भक्तौघप्रतिपालनाय कलिताकारा चिदेषा परा
तारानायकशावकाङ्कविलसद्भाला विशालाकृतिः ।
काश्यां राजति काऽपि निस्तुलदया मूर्तेव शम्भोरियं
चेतस्तुङ्गतुरङ्गबन्धनकुटी देवी परा **सङ्कटा** ॥ ३२ ॥

वर्षन्ती करुणारसं जलगताम्भोजोपमाभ्यां पुन—
र्नेत्राभ्यां प्रलयानलद्युतिमलीकस्थेन तेनोज्ज्वलाम् ।
सिन्दुरप्रकरारुणीकृताशिरःशीतांशुपोतस्फुर-
ल्लक्ष्मीः का ऽप्यधिकाशि राजति दयाम्भोधिः शिवा **सङ्कटा** ॥ ३३ ॥

इत्थंविधायाश्चतुःषष्टिकोटियोगिनीवृन्दनायिकायाः श्रीसङ्कटादेव्या निरन्तरसमाराधनजन्यप्रभूतसुकृतानुभावेन सर्वतः समेधमानविजयसौभाग्यसमुन्नतिः शास्त्रिवरः सर्वदा निजनित्यकर्मानुष्ठानपठनपाठनशास्त्रचिन्तनादिव्यतिरेकेण लौकिकेषु विषयेषु शिशुरिव सद्यो

जातो ऽनभिनिविष्टः सत्ययुगपुरुष इव सुखेन कालं निनाय ।

१९०६ षड्व्योमनिधिचन्द्राङ्के ख्रीस्ताब्दे श्रीमज्जगद्गुरुशङ्कराचार्यैः समं **स्वामिनारायण**मतानुयायिनां विवादः समजनि । क्रमेण लब्धोन्नतिर्विवादो ऽयं राजकीयाधिकरणेषु प्राऽवर्त्तत । तत्र माध्यस्थ्येन वृतोऽपि शास्त्रिवरो न स्वीचकार मध्यस्थताम् । किम्बहुना **स्वामिनारायण**मतानुयायिभिरुत्कोचरूपेण पञ्चविंशतिसहस्रमुद्रारूपं दीयमानं द्रव्यमसौ धार्मिकाग्रेसरः प्रत्याचख्यौ । दृष्ट्वेदं साहसं परितुष्टैर्जगद्गुरुभिः शङ्कराचार्यैरमुष्मै महानुभावाय **"अशेषवाङ्मयपारगवैयाकरणकेसरी"** इत्युपाधिः सुवर्णपदकं च सबहुमानं प्रदत्तम् ।

नवनवत्यधिकाष्टादशशततमे ईशवीये वर्षे १८९९ सम्राज्ञ्याः प्रतिनिधिभूतेन श्रीमता **लार्डकर्जन**महोदयेन श्रीमते शास्त्रिवराय **'महामहोपाध्याय'**पदवी वितीर्णा ।

उद्यद्बालपतङ्गभासुरतमः श्रीमानसौ भूसुरो
विद्यातीव्रतपःप्रभावविलसत्तेजःप्रकर्षोदयः ।
लब्ध्वा तामनणीयसीं सुपदवीं वैदुष्यसम्पादितां
रत्नं काञ्चनसङ्गतुङ्गरुचिमद्रेजे यथा ऽसौ तथा ॥ ३४ ॥

प्रथमपत्न्या निधनानन्तरं १८८० व्योमाष्टवसुचन्द्रमिते ख्रीस्ताब्दे भट्टभट्टवंशोद्भवया कन्यया ऽस्य द्वितीयो विवाहः समजनि । दुर्दैवात्सा ऽप्यस्य पत्नी कालवशं जगाम । तदनन्तरं गृहस्थाश्रमाद्विरक्तचित्तो ऽप्यसौ १८८३ त्र्यष्टाष्टचन्द्रमिते ख्रीस्ताब्दे गुरुवराणां **श्रीबालशास्त्रिणा**मनुरोधेन तृतीयं विवाहं विदधे । जगदीश्वरा-

नुग्रहादस्य पञ्च पुत्रास्तिस्रः कन्यकाश्च समभूवन् । तत्र त्रयः पुत्राः कन्यका चैका वर्तन्ते ।

ज्येष्ठे भ्रातरि श्रीमति **रामशास्त्रि**महोदये शास्त्रिवरस्य जनक इव प्रगाढा भक्तिरासीत्, यावज्जीवनं यावदर्जितमखिलमग्रजायैव समर्पयता ऽनेन महानुभावेन परिवारिकी चिन्ता लेशतो ऽपि नाऽकारि । **रामशास्त्रि**वरोऽपि सुताधिकममुष्मिन् स्निह्यन् शारीरक्लेशजातमगणयन् अस्य परिवारचिन्तां स्वयमेवोवाह । पञ्चाधिकैकोनविंशतितमे १९०५ खीस्ताब्दे **रामशास्त्रिणि** कालवशं गते तदीयमौर्ध्वदैहिकं कर्म पुत्राधिकभक्तिभाजा ऽमुना महता गौरवेण सम्पादितम् ।

१९०३ त्रिव्योमनिधिधरामिते खीस्ताब्दे स्वयमध्यापितस्य पुत्रवत्परिपालितस्य व्याकरणसाहित्यशास्त्राचार्यस्य काशिकराजकीयपाठशालायामध्यापकत्वेन नियुक्तस्य निजभ्रातृपुत्रस्य **भारद्वाजनारायणशास्त्रिणो** ऽकालनिधनेन नितान्तं क्षुब्धचेताः शास्त्रिवरः प्रायो लौकिकं व्यवहारजातं सकलमेव क्रमशः परित्यजन् विरक्तचेता आवश्यकपठनपाठनादिकार्याऽविरोधेन वेदान्तचिन्तनमेव विदधानो भारभूतमिव जीवितं वहन् कथमपि कालं निनाय । अष्टाधिकैकोनविंशतितमे ईशवीये वर्षे स्वजनानां पाठशालाध्यक्षमहोदयानां च भूयांसमप्यनुरोधं निर्धूय तत्याज पाठशालीयं कार्यं जग्राह चाऽवसरम् । ततः परमध्यापनादिकार्यमपि परित्यज्य वेदान्तचिन्तनं भगवदनुध्यानमेव केवलं विदधानो ऽयं श्रीसङ्कटाभक्तः श्रीसङ्कटामन्दिर एव तदनुध्याने विशेषं समयं यापयामास । दर्शनागतैरपि जनैः सह

शास्त्रीयसंलापं विहाय लौकिकवार्तालापोऽनेन सर्वथा पर्यत्याजि । अवसरेऽस्मिन् कश्चन शास्त्रीयं ग्रन्थं निर्मातुं स्वकीयैः परकीयैश्चाभ्यर्थितेनाऽमुनेत्थमेव सद्यः समुत्तारितम्, यत् "प्राचीनैर्महानुभावैः कृता ग्रन्था नाऽऽधुनिकैः साकल्येन परिशील्यन्ते, किन्तर्हि नवीनग्रन्थनिर्माणेन । प्राचीनग्रन्थानां टीकाटिप्पणादिकमपि न लाभदायि भवेत् यतः सुकुमारमतयोऽर्वाचीनास्तत्सद्भावे ग्रन्थेषु परिश्रमं सर्वथा परिहरेयुः इत्थं च पाण्डित्यहानिः सम्पद्येत" इति ।

अथैष जराजर्जरोऽपि नित्यक्रममक्षुण्णं सम्पादयन् वार्द्धकसुलभामयोपसृष्टोऽपि निधनात्पूर्वं केवलं पञ्चैव दिनानि रोगशय्यां शयानो गङ्गास्नानसङ्कटापूजनादिनित्यनियमलोपेन दूयमानोऽन्नं परित्यज्य गव्यदुग्धमात्राहारः षट्षष्ठ्यधिकैकोनविंशतितमे वैक्रमे वत्सरे (१९०९ ई०सन्) भाद्रपदे कृष्णपक्षे परब्रह्मणः परमात्मनः श्रीकृष्णचन्द्रस्य जन्माष्टम्यां प्रातस्तालमात्रोच्छ्रिते भगवति भास्करे प्रशान्तचेताः स्मितमनोहरवदनस्तत्याज पाञ्चभौतिकं वपुर्वैयाकरणकेसरी श्रीमान् दामोदरशास्त्रिभारद्वाजमहोदयः ।

षट्षष्ट्युत्तरनन्दभूपरिमिते संवत्सरे वैक्रमे
भाद्रे मासि दले च किञ्च बहुले जन्माष्टमीपर्वणि ।
भारद्वाजकुलाब्धिकौस्तुभमणिर्विद्वत्कुलाखण्डलः
सायुज्यं समुपागमद्भगवतः शम्भोः स दामोदरः ॥ ३५ ॥

विद्वद्वृन्दममन्दशोकमभजद्विद्यार्थिवर्गः पुन-
र्हाहाकारकरालतामुपगतो म्लानाननाब्जोऽभवत् ।
शास्त्रार्थस्य कथा कथापथमिता प्रौढिश्च साऽस्तङ्गता

**श्रीदामोदरशास्त्रि**पण्डितवरे याते पदं शाम्भवम् ॥३६॥

विद्वत्संसदि वादिदन्तिनिवहे पारीन्द्रता साऽद्भुता
प्रावृट्कालपयोदविस्मयकरी सा गर्जनाऽप्युच्चकैः ।
उद्यद्बालपतङ्गदीप्तिनिवहन्यक्कारि तेजो ऽपि तत
**श्रीदामोदरशास्त्रिणैव** सह तद्यातं समस्तं किल ।३७।

शास्त्रिवराणां त्रिषु तनयेषु ज्येष्ठः श्रीमान् व्याकरणसाहित्याचार्यो विद्वत्तमो **भारद्वाजगङ्गाधरशास्त्री** काशिकराजकीयपाठालये साहित्यदर्शनाध्यापकपदे नियुक्तो विराजते ।

यः खलु,

बुधवरनिजतातक्षुण्णमार्गानुसारी
सुचरितमहनीयः पण्डितेषु प्रसिद्धः ।
नृपवरसुरवाचामालयेऽध्यापकः सन्
अपगतभयमुच्चैः पाठयत्येव नित्यम् ॥ ३८ ॥

द्वितीयस्तनयः श्रीमान् **विश्वनाथशास्त्री** भारद्वाजः एम्० ए० काव्यतीर्थः काशीहिन्दूविश्वविद्यालये प्राच्यविद्याविभागे आङ्ग्लभाषाध्यापकपदमलङ्करोति ।

तृतीयस्तनयः श्रीमान् **जगन्नाथशास्त्री** भारद्वाजः एम्०ए० एल्०एल्०बी० पदवीको राजकीयाऽधिकरणेषु व्यावहारिकतां कुर्वन् सुखमास्ते ।

अथ शास्त्रिवराणामगणितेषु भारतवर्षव्यापिषु शिष्येषु ये सविशेषं प्रसिद्धिभाजो विद्वत्तमा विख्याताः सन्ति, तेषु कतिपयानुल्लिखामः—

श्रीमन्तो व्याकरणसाहित्यादिपारङ्गमाः पण्डितेन्द्राः श्रीकाशी-

विश्वविद्यालयप्राच्यविद्यालयसाहित्यदर्शनप्रधानाध्यापकाः **श्रीचन्द्रधरशर्माणः** शिष्या एव शास्त्रिमहोदयानाम्—

विद्वन्मान्यतमा नितान्तसरलोदारस्वभावाः पुनः
साहित्ये भरतोपमाः पदविधौ पाणिन्यभिख्याजुषः ।
वीणावादनकर्मठाः सहृदयश्रेणीसमिद्धादराः
श्रीमच्चन्द्रधराह्वया बुधवराः ख्याता जयन्ति क्षितौ ॥३९॥

श्रीमन्तो वैयाकरणधूर्धराः प्रख्यातकीर्तयः कलिकाताराजकीयपाठशालायामध्यापकचराः भूतपूर्वयुक्तप्रान्तीयसंस्कृतपाठशालाप्रधाननिरीक्षकाः कतिपयमासान् यावत् काशिकराजकीयपाठशालाप्रधानाध्यक्षपदाधिष्ठिताः **श्रीठाकुरप्रसादद्विवेद** महोदया अपि शिष्या एव शास्त्रिमहोदयानाम्—

विद्वद्वृन्दसमेधमानसुयशःशुक्लीकृताशान्तराः
सौभाग्योपनतोन्नतोन्नतपदारूढाः प्ररूढश्रियः ।
ईशानुग्रहलब्धसन्ततिलसत्सम्पत्तिसम्पूरिताः
श्रीमट्ठाकुरसुप्रसादपदभृद्वर्या जयन्ति ध्रुवम् ॥ ४० ॥

श्रीमन्तो वैयाकरणाग्रेसरा धर्मशास्त्रवेदान्तादिष्वपि प्रौढव्युत्पत्तयो विद्वन्मान्यतमाः काशिकराजकीयपाठालये व्याकरणशास्त्रप्रधानाध्यापकाः**श्रीरामभवनोपाध्यायशर्माणोऽपि** शिष्या एव शास्त्रिवराणाम्—

शास्त्रे व्याकरणे पतञ्जलिसमा विख्यातसत्कीर्तयो
नानासंसदधिष्ठिताः पटुतरस्फूर्जन्मतिप्रक्रमाः ।

छात्राध्यापनकर्मठाः प्रतिदिनं विश्वेशपूजाविधौ
मालापुञ्जसमर्पणेन विदिता विद्यावदग्रेसराः ॥ ४१ ॥

श्री**रामभवना**भिख्या **उपाध्याय**पदाङ्किताः ।
उपाधीन् बहुलान् भव्यान् लभन्तामचिरादिमे ॥ ४२ ॥

श्रीमन्तो व्याकरणशास्त्रविदां वन्द्या अध्यापकाऽग्रेसरा अध्यापितानेकपण्डिता निरन्तरमध्यापनैकव्रताः सरलोदाराशया महनीयचरिताः श्रद्धेयाः श्री**देवनारायणत्रिवेदिनः (तिवाडीजी)** इति प्रसिद्धनामधेयाः काशिकराजकीयपाठालये व्याकरणाऽध्यापकाः पण्डितेन्द्रा अपि शिष्या एव शास्त्रिमहोदयानाम्—

यैरध्याप्य गुरोः सुतं बुधवरं **गङ्गाधरं** सादरं
शास्त्रं व्याकरणं, गुरोरुपकृतेरुद्धार आसादितः ।
नागेशोक्तिमयीव पाणिनिगिरां सारात्मिका मञ्जुला
येषां वाक् प्रविहाय शास्त्रविषयं नाऽन्यत्र धत्ते पदम् ॥४३॥

अनेकशतविद्यार्थिवृन्दमध्यगता इमे ।
पाठालयस्याऽलङ्कारा राजन्ते गुरुसन्निभाः ॥ ४४ ॥

श्रीमन्तो व्याकरणवेदान्तमीमांसादिशास्त्रव्याख्यातारः शास्त्रार्थसभासु च लब्धप्रतिष्ठाः प्रकृष्टपाण्डित्याः काशिकराजकीयविद्यालये व्याकरणशास्त्राध्यापका **मोकाटे**—इत्युपनामकाः **श्रीगणपतिशास्त्रि** शर्माणो ऽपि शास्त्रिवराणां प्रियतमा एव शिष्याः—

शास्त्रं व्याकरणं गुरोरधिगतं यैः सम्प्रदायक्रमा-
च्छुद्धं, स्वप्रतिभाबलादनुपमां कोटिं च सम्प्रापितम् ।

छात्रौघः शतशोऽनिशं प्रतिदिनं यैः पाठ्यते निर्भयं
**मोकाटे** कुलजा जयन्ति **गणपत्याख्यास्तु** ते शास्त्रिणः ॥४५॥

श्रीमन्तो मान्यवरा राजपदवीकस्य **बलदेवदासविरला-ख्यस्य** वणिजः पाठशालायां प्रधानाध्यापकाः पण्डितेन्द्राः **सभापत्युपाध्याय** शर्माणोऽपि शिष्या एव शास्त्रिवराणाम्—

श्रीमद्राजवराश्रयादनुदिनं यैः स्वानुगाः पण्डिता
नानावस्त्रविभूषणैरगणितै रत्नैर्धनैः सादरम् ।
पूज्यन्ते, यदुपाश्रिताश्च बहवो विद्यार्थिनः श्रीयुता
विद्यन्ते त इमे **सभापति**बुधा राजन्ति विद्वद्वराः ॥ ४६ ॥

श्रीमन्तः प्रखरप्रतिभाशालिनः सर्वशास्त्रावगाहिशेमुषीकाश्चतुर-शिरोमणयः परमसुहृदो जगन्नाथपुरीराजकीयपाठालयप्रधानाध्यापकाः **श्रीरामाज्ञापाण्डेय**शर्माणोऽपि शास्त्रिवराणां शिष्या एव—

नास्ते कोऽपि तथाविधोऽत्र विषयो यस्मिन्न येषां मति—
र्व्यापारं विदधाति सर्वविषयोदञ्चद्धियो ये सदा ।
पाश्चात्येषु गवेषणादिविषयेष्वप्युच्छलत्कौशला
**रामाज्ञेति** यथार्थनामकलिता राजन्त्यमी पण्डिताः ॥ ४७ ॥

वैयाकरणप्रवराः शास्त्रान्तरेष्वपि प्रविष्टमतयः शास्त्रार्थसभासु प्रसिद्धाः सरलस्वभावाः काशीस्थटीकमाणीसंस्कृतमहाविद्यालयाऽध्या-पकाः श्री**पूर्णचन्द्राचार्य**शर्माणोऽपि शिष्या एव शास्त्रिवराणाम्—

विख्याता विदुषां गणे समितिषु प्रौढप्रतिष्ठाजुषः
शास्त्रार्थेषु विशङ्कमुद्भटगिरो निर्भीकताशालिनः ।

काशीसंस्थितटीकमाणिसुरगीविद्यालयाऽध्यापका
आचार्याः खलु **पूर्णचन्द्र**पदभृद्वर्या बुधाः सन्त्यमी ॥ ४८ ॥

श्रीमन्तः परमहंसपरिव्राजकाचार्या व्याकरणवेदान्तादिशास्त्रनिष्णाता 'एटा' मण्डलान्तर्गत 'सोरो' नगरस्थवराहमन्दिरमहन्थ श्री**चिदानन्दघन**स्वामिमहोदया अपि शास्त्रिवराणां शिष्या एव—

वेदान्तदर्शनविमर्शनशालिशीलाः
ख्याता बुधेषु निजसद्गुणगौरवेण ।
छात्रोपकारचिताऽमितपाठशालाः
कुन्दाऽवदातसुयशोधवलीकृताशाः ॥ ४९ ॥

श्रीम**च्चिदानन्दघन**नामानः स्वामिपुङ्गवाः ।
श्रीमतां शास्त्रिवर्याणां शिष्याः सन्त्यनुगा अमी ॥५०॥

श्रीमन्तो बेतियाराजपुरोहिताः **श्रीगणेशदत्तझा**शर्माणः, नेपालराजपुरोहिताः **श्रीभुवनेश्वरप्रसादजी**शर्माणः, साहित्योपाध्यायाः **श्रीसूर्यप्रसादमिश्र**शर्माणः, **श्रीरामेश्वरशास्त्रिसराफ**शर्माणः, **श्रीपरमेश्वरमिश्र**शर्माणः, छपरास्थमारवाड़ीसंस्कृतमहाविद्यालयप्रधानाध्यापकाः श्री**गयादत्तपाण्डेय**शर्माणोऽन्येऽपि बहवः प्रभूतपाण्डित्याः शास्त्रिवराणां शिष्याः सन्त्येव, यैरद्याऽपि विद्वन्मण्डलमलङ्क्रियते, येषां सर्वेषां नामानुकीर्तनं वाक्पथातीतमिति परिहृतम् ।

काशीस्थरणवीरपाठशालाप्रधानाध्यक्षाः पण्डितवराः **श्रीचन्द्रभूषण**शर्माणोऽपि शास्त्रिवराणामेव शिष्या आसन्—

नानाशास्त्रविचारकर्मकुशला विद्वद्गणे संस्तुता
नानोपाधिसमिद्धकीर्तिनिवहाः प्राचीनमार्गानुगाः ।

विख्याते रणवीरसंस्कृतवचोविद्यालये सर्वतो
मुख्याध्यक्षपदस्थिता बुधवराः स्वर्गं गतास्तेऽधुना ॥५१॥

श्रीमन्तो मान्यवरा विरचितानेकप्रबन्धाः पण्डितवराः **श्रीरामदत्तपन्थ**शर्माणो बरेलीकालेजसंस्कृताध्यापका अपि शास्त्रिमहोदयानां शिष्या एवाऽऽसन्—

अनेकग्रन्थनिर्माणजातकीर्तिसमुज्ज्वलाः ।
**श्रीरामदत्तपन्थाख्याः** शिष्यास्ते प्रथिता भुवि ॥५२॥

बाणाष्टाङ्कशशाङ्कसंमिततमे सवत्सरे वैक्रमे
वैशाखे वहुले दले बुधदिने भानोस्तिथौ सादरम् ।
विद्वद्वृन्दचकोरचन्द्रमहसो **दामोदरा**ख्याजुषो
भारद्वाजकुलोद्भवस्य चरितं नूनं समाप्तिं गतम् ॥५३॥

विश्वेश्वरस्य सायुज्यं गतवान् विबुधोत्तमः ।
एतेन प्रीयतां श्रीमान् **दामोदर**वपुर्हरः ॥ ५४ ॥

**श्रीगङ्गाधर**सद्गुरुप्रातिफलत्सारस्वतज्योतिषः
**श्रीरामाङ्घ्रि**निषेवणाप्तसुमतेः सन्तीर्णशास्त्राम्बुधेः ।
**श्रीमद्भैरवनायका**त्मजनुषः सद्धर्मलक्ष्मीजुषः
**श्रीनारायणशर्मणः** कृतिरियं विद्वन्मुदे जायताम् ॥ ५५ ॥

इति श्री**खिस्ते**-इत्युपाख्य **नारायणशास्त्रिणा** प्रणीते **विद्वच्चरितपञ्चके श्रीदामोदरशास्त्रिभारद्वाज** चरितं नाम
तृतीयः परिच्छेदः ॥ ३ ॥





श्रीमन्महामहोपाध्याय श्रीशिवकुमारमिश्रः ।

जन्मसंवत् १९०४ मृत्युसंवत् १९७९

विद्वत्समाजप्रथमपूजिताङ्घ्रिसरोरुहः ।
श्रीमान् शिवकुमाराख्यः ख्यातो विजयते बुधः ॥

# श्रीशिवकुमारशास्त्रिचरितम् ।

अथ ब्रूमो ऽनुक्रमेण विद्वद्वृन्दाग्र्यताजुषः ।
श्रीमाच्छिवकुमाराख्यशास्त्रिणश्चरितं परम् ॥ १ ॥

अस्ति स्वर्गतरङ्गिणीपरिगता स्वर्गाधिका सम्पदा
देवैर्मानुषविग्रहैश्च सहिता ख्याता त्रिलोकीतले ।
कैलासं प्रविहाय विश्वपतिना या ऽधिष्ठिता सर्वदा
**काशी** नाम पुरी तरिर्भवमहाम्भोधेः समुद्धारिणी ॥ २ ॥

तस्या एव किलोत्तरे तु चतुरः क्रोशानतीत्य स्थितः
स्वर्गः किन्नु रसारसादुपगतः स्वांशेन वाऽत्रोषितः ।
देवानां नरभावकल्पितधियां वासाय वा वेधसा
क्लृप्तो ग्रामवरो विराजतितमाम् **उन्दी** ति लोके श्रुतः ॥३॥

तत्राऽऽसीत् परमेष्ठिकल्पसुमहातेजाः सुजातो द्विजो
**मिश्रः** श्रीयुत **रामसेवक** इति ख्यातो यथार्थाऽभिधः ।
शम्भोर्भक्तवरो बुधः स शरयूपारीणविप्राग्रणीः
सद्धर्माचरणे सदैव निरतस्तद्ग्रामगैरादृतः ॥ ४ ॥

प्रख्याते **मिश्रवंशे** लब्धजन्मा **उन्दी** ग्रामनिवासी मतिमत्तमो **रामसेवको** नाम शरयूपारीणब्राह्मणश्रेष्ठः स्वपितुः पञ्चसु तनयेषु सर्वतः कनीयान् भगवति शशाङ्कशेखरे पार्वतीपतौ नैसर्गिकप्रगाढभक्तिशाली देवद्विजाराधनतत्परोऽसौ **मतिरानी** नामिकया भार्यया सह सर्वोपकारक्षमं गार्हस्थ्यमाचरन् सुखमवसत् ।

दुर्दैवादस्य चत्वार्यपत्यानि जातमात्राण्येव कालवशमगमन्। इत्थं दुःखितचित्तोऽयं स्वेष्टदेवं शङ्करमहर्निशमाराधयन् भक्तवत्सलस्य तस्यानुग्रहादेव भविष्णुं पण्डिताखण्डलं त्रिलोकीतिलकायमानं महानुभावं पुत्रं लेभे। स एवास्मच्चरितनायकः साक्षादिव विनायकः कुन्दावदातसुयशोधवलीकृताखिलधरातलः सर्वविद्यानिधिर्महामहोपाध्यायाद्यनेकविरुदावलीसमलङ्कृतः श्रीमान् **शिवकुमारमिश्रः**।

महानुभावोऽयं वेदव्योमाङ्कचन्द्रसम्मिते १९०४ वैक्रमेऽब्दे फाल्गुनकृष्णैकादश्यां श्रीमतो **रामसेवकमिश्रस्य** धर्मपत्न्यां श्रीमत्यां **मतिरानी** देव्यां जन्म लेभे।

इन्द्राणीव जयन्तनामकसुतं गौरीव नागाननं
प्राचीवाऽरुणरोचिषं दिनकरं गङ्गेव सत्यव्रतम्।
श्रीमत्पण्डित**रामसेवक**पदख्यातस्य भार्या सती
प्राऽसूत प्रगुणश्रियं **शिवकुमाराख्यं** प्रसिद्धं सुतम्॥ ५॥

वंशद्वयीविमलमौक्तिककल्पकान्तौ
**श्रीरामसेवक**हृदब्जविकाससूर्ये।
जाते सुते **शिवकुमार** इति प्रसिद्धे
सिद्धैरकारि गगनात् कुसुमौघवृष्टिः॥ ६॥

जातस्य तस्य किल लोकविलक्षणस्य
भालेऽष्टमीशशिनिभे सुतरां विशाले।
श्वेतप्रभं किमपि लक्ष्म, तथा त्रिशूल—
चिह्नं व्यलक्षि रसनाग्रगतं विचित्रम्॥ ७॥

इत्थं लोकविलक्षणं श्वेतलक्ष्मत्रिशूलचिह्नाङ्कितं बालकमालोक्य

दुर्लक्षणमिदं मन्यमानाः सूतिकागृहगताः पुरन्ध्र्यो दुर्भागधेयमस्य सम्भावयन्त्यः परित्यजनीयमेवैनं निरणैषुः ।

श्रुत्वा चेदं वृत्तं श्रीमान् **रामसेवकमिश्र**महोदयः सूतिकागृहं गत्वा स्वयं बालकमालोक्य तस्य तथाविधानि लक्षणानि पश्यन् निजगुरोराशीर्वादं स्मरन् बालकं परित्यक्तुकामास्ता निवारयन्नवोचत–

"भद्राः ! नाऽयं दुर्लक्षणो बालः स्मराम्यहं सिद्धस्य गुरोरादेशं, 'भविष्यति महाप्रभावः साक्षादिव विश्वनाथस्तव पुत्रः' इति । स एवाऽयं सिद्धादिष्टो लोकविलक्षणलक्षणस्तनयः नूनमनेन महाप्रभावेण भाव्यम्" इति ।

श्रुत्वैतत्सञ्जातविस्मयाः शिशोर्लोकोत्तरत्वे श्रद्दधानास्ताः स्त्रियस्तत्परित्यागविचारं परित्यज्य गुणवन्तं तं शिशुं लालयामासुः ।

अथ मौहूर्तिकैर्विचारिते ऽस्य प्रादुर्भावसमये तत्क्षणे शुभोदग्रग्रहाणां प्राचुर्यं सुदुर्लभं चतुःसागरयोगं च बाढं पश्यन्तः श्रीम**द्रामसेवकमिश्र**पुरःसराः स्वजनाः शिशोः शोभनायतिमत्तां भाविनीं लोकोत्तरतां च निःशङ्कं निरधारयन् ।

हिताय लोकस्य धृतावतारा
लोकोत्तरैर्लक्ष्मभिरेव युक्ताः ।
भवन्ति लोके प्रथिता महान्तो
विलक्षणैर्धीविभवैरुपेताः ॥ ८ ॥

अथैष सविशेषवात्सल्यं लाल्यमानः पितृभ्यां स्वजननयनानन्दनो भविष्यद्वागीशतादर्शी **श्रीशिवकुमार** इति सार्थकं नाम प्राप्य शशीव शुक्ले दले प्रतिदिनमेधमानकलोज्ज्वलः सहैव स्वजनानन्देन ववृधे ।

इत्थं बालकेलीरनुभवतोऽस्य भविष्णोर्महापण्डितस्याऽऽयुषः पञ्च वर्षाणि सुखेन व्यतीयुः ।

अत्रान्तरे दुर्दैवादस्य फलोन्मुखाज्जनको गतः पञ्चत्वम् ।

दुग्धमुग्धास्यस्यैव शिशोरस्य शिरसि पपात दारुणोऽशनिर्जनकस्य निधनेन । इत्थमनाथस्य नाथो भगवानेवाऽस्य रक्षकोऽभूत् ।

एकादशहायनाऽवस्थमेनमेतदीयः पितृव्यो बेतियाराजानुजीवी सुशिक्षासम्पादनाय निजावासं बेतियानगरं निनाय । अथ तत्र सुखं निवसन्नसौ ज्यौतिषं पठितुमारेभे । कियत्कालमित्थमधीतज्यौतिषोऽसौ भविष्यद्वैदुष्यसाम्राज्यसम्राट् कुमारः **शिवकुमारः** पण्डितस्या**म्बिकाप्रसादमिश्र**स्यादेशमनुरुन्धानो विहाय ज्यौतिषाध्ययनं तत्रत्यस्यैव पण्डित **वाणीदत्तचौबे** इत्याख्यस्य विदुषः सकाशाल्लघुकौमुदीं पठितुमारभत ।

शास्त्रं पठन् ज्यौतिषमेष धीमान्
अवश्यभव्यस्य विधेर्विधानात् ।
नागेशकीर्तिं किल वर्द्धयिष्यन्
आकृष्टधीर्व्याकरणे बभूव ॥ ९ ॥

कः पूर्वसागरसमागममीहमानां
गङ्गां निवर्त्तयतु पश्चिममम्बुराशिम् ।
राकाशशाङ्कवदनस्य विलोकनेन
मोदं तिरोदधतु के नु चकोरयूनाम् ॥ १० ॥

शब्दशास्त्रं समुद्धर्तुमवतीर्णः पुनः स्वयम् ।
पतञ्जलिरिव प्राज्यधीरसौ धीरताऽन्वितः ॥ ११ ॥

नियोगान्नियतेर्नूनमप्रत्याख्येययताजुषः ।
समारभत चाऽध्येतुं शास्त्रं व्याकरणं ततः ॥ १२ ॥

लोकोत्तरप्रातिभाप्रतिभासमानस्य द्वितीयस्येव गीष्पतेरस्य बेतियानगरवासिभ्योऽध्यापकेभ्योऽधीयानस्य न मनस्तोषः समभूत् । अनेके विकल्पाः स्वयमस्य चेतसि प्रादुर्भवन्तोऽपि तथाविधस्य वक्तुरभावात् कल्लोला इव जलनिधौ मनस्येव विलीना अभूवन् । इत्थं योग्यस्य गुरोरभावेन दूयमानमानसोऽसौ चतुर्दशहायनावस्थः पिपाठिषया काशिकां समाजगाम ।

अथ जगद्विख्याते त्रिभुवनीललामपण्डितालङ्कृते काशीस्थराजकीयसंस्कृतमहाविद्यालये प्रविष्टस्तत्रत्यव्याकरणशास्त्राऽध्यापकसुलतानपुराऽभिजन **दुर्गादत्तपण्डित**-सविधेऽध्येतुमारभत । लघुकौमुद्यास्तिङन्तप्रकरणे एधधातुमारभ्याऽस्य पाठारम्भो बभूव । एधधातुर्हि वृद्ध्यर्थः, शास्त्रिवरस्य दृढोऽयमासीद्विश्वासः, यत् तं समयमारभ्यैवाऽस्य वृद्धेः सूत्रपातो बभूवेति ।

तदानीं काशीतः क्रोशत्रयं दूरे कस्मिंश्चिद्ग्रामे निवसन्नसौ प्रत्यहमुषसि समुत्थाय ग्रामात् पदातिरेव प्रचालितः पाठशालायामुपागत्य गुरोः पाठं गृहीत्वा मणिकर्णिकातीर्थे स्नात्वा कृताह्निकः कलशमेकं भागीरथीजलपूरितं स्कन्धेन वहन् भक्तिप्रह्वचेता भगवतो विश्वनाथस्य मन्दिरं गत्वा तत्र तेनाऽऽत्मनाऽऽनीतेन गङ्गाजलेन भगवन्तमभिषिञ्चति स्म । विद्यार्थ्यवस्थायामविच्छेदेन प्रतिपालितोऽयं नियमः श्रीमता धीमतामग्रेसरेण **श्रीशिवकुमारमिश्रमहोदयेन** ।

इत्थमेवाऽस्याऽऽयुषः सार्द्धाष्टादश समा व्यतीताः । सपरिष्कारं

कृत्स्नमधीतमनेन व्याकरणं तावता समयेन । भगवतो विश्वनाथस्य सेवाऽपि निरन्तरायमेव समपादि ।

भक्तवत्सलस्य भगवतो गौरीपतेर्निरन्तरपरिचरणजन्मनोऽनुग्रहादेवाऽस्य तादृशं लोकोत्तरं पाण्डित्यं, चतुराशावकाशकुक्षिम्भरिः सुयशोराशिश्चाऽऽसीदिति मन्यामहे ।

निर्व्याजं विहिता देवतागुरुसेवा न कदाऽपि वितथा भवतीति हि सकलानामपि शास्त्राणां डिण्डिमघोषः, किम्पुनः साक्षात्परब्रह्मणः कलिकालकलुषसमुद्धाराय परित्यज्य कैलासं काशीमधितिष्ठतो भगवतो गौरीपतेर्विश्वनाथस्य ।

यः खलु,

ब्रह्माद्यैस्त्रिदशैरचिन्त्यमहिमा सोमार्द्धचूडः प्रभु—
वेदान्तैरपि नेति नेति वचनैः किञ्चित्कथञ्चित्स्तुतः ।
वामोत्सङ्गविराजमानगिरिजावक्त्रेन्दुबद्धेक्षणः
कामारिः कमनीयकान्तिकलितो देवः शिवो राजते ॥ १३ ॥

भाले यस्य हुताशनस्तदुपरि स्पष्टं शशी वर्तते
गङ्गा येन कपर्ददुर्गगहने बद्धा बलाद्भासते ।
शूलं किञ्च बिभर्ति यस्त्रिभुवनीमूलं विभूतिस्फुरन्
भक्तौघामरपादपः स भगवान् विश्वेश्वरो राजते ॥ १४ ॥

आराधितः सरलनिर्मलचेतसा यः
सायुज्यमर्पयति भक्तजनाय सद्यः ।
काशीस्थपण्डितजनप्रमुखत्वमापत्
भक्तस्तदीय इति विस्मयकारणं न ॥ १५ ॥

अथाऽसौ भगवता विश्वनाथेनानुगृहीतः सुगृहीतनामधेयो विद्वद्वरः **शिवकुमारो** व्याकरणाऽध्ययनं परिसमाप्य न्यायवैशेषिकदर्शनविमर्शनसस्पृहस्वान्तो नैयायिकप्रवरं काशीस्थराजकीयपाठालये तदानीन्तनं न्यायवैशेषिकदर्शनाध्यापकं **श्रीकालीप्रसादशिरोमणिं** नाम वङ्गदेशीयपण्डितं सादरमुपगम्याल्पीयसैव कालेन तस्माद्धेत्वाभासान्तं न्यायमधिजगाम ।

विदुषां गणे लब्धख्यातेर्व्युत्पन्नशिरोमणेर्दार्शनिकप्रवराच्छ्रीमतो **गणेशश्रौतिनः** सकाशात्समग्रं खण्डनखण्डखाद्यं च जग्राह ।

मीमांसाद्वयधुरन्धराज्जगद्विख्यातवैदुषीवैभवात् परमहंसपरिव्राजकाचार्यात् श्रीमतो **विशुद्धानन्दस्वामि**महोदयादद्वैतसिद्धिं पूर्वमीमांसादर्शनं च सद्यः सम्पादयामास ।

इत्थमसौ मधुकर इव मधुबिन्दून् सुमनःसमूहाद्विद्यामनवद्यामासाद्य विद्यार्थिदशागतोऽपि विद्वद्गणे लब्धख्यातिरलौकिकप्रतिभाबलेन विश्रुतस्तात्कालिककाशिकराजकीयपण्डितमण्डलाग्रेसरस्य गृहीतावतारस्येव भगवतो विश्वनाथस्य **श्रीविश्वनाथ**पराभिधानस्य **रानडे**पाख्यस्य श्रीमतो **बालशास्त्रिणो** दृष्टिमाचकर्ष ।

बुधान्तरस्याऽपि च शिष्यमेनं
**श्रीबालशास्त्री** स्पृहयांबभूव ।
प्रायो महान्तः स्वपरानपेक्षाः
स्निह्यन्ति बाढं सुगुणेषु नित्यम् ॥ १८ ॥

अथैकदा ऽमुं पाठशालायामध्ययनार्थमुपस्थितमालोक्य श्रीमान् **बालशास्त्रिवरः** स्वयमेव समाहूय सस्नेहमवोचत—"वत्स ! शि-

**वकुमार** ! पश्यामि भवतो विलक्षणां प्रतिभां, गाढानुरागं च शास्त्रेषु, तद्यदि भवान् अस्मद्गुरोः **श्रीराजारामशास्त्रिणः** सविधे ऽधीयीत, तर्हि वरम्" इति ।

अवसरज्ञो धीमत्तमः **शिवकुमारो**ऽपि सद्यः सविनयं प्रत्यवोचत—"महानुभावाः ! जराजर्जराः किल श्रीमन्तो **राजारामशास्त्रिणः**, तद्यदि श्रीमन्त एव सानुकम्पं मामध्यापयेयुस्तर्हि साफल्यं भवेज्जनुषो मम" इति ।

महाप्रभावः श्रीमान् **बालशास्त्रिवरो**ऽपि भविष्यन्तं विद्वच्चक्रवर्त्तिनममुं निश्चिन्वन् सस्नेहं सकौतुकं चाऽध्यापनमङ्गीकृतवान् । इत्थं सुदैवेन सुवर्णसुगन्धसंयोगः समपादि ।

अथैषोऽशेषविद्याऽऽपगासङ्गमसङ्केतस्थलमहासागरायमाणं प्रगुणगुणगणं विचक्षणगणाग्रगण्यं सुयोग्यं गुरुमासाद्य सद्यः समुपजातसविशेषमनस्तोषस्तदन्तिके वत्सरद्वयं यावत्सूक्ष्मातिसूक्ष्मान् कुशाग्रधिषणैरेव सुज्ञेयान् व्याकरणशास्त्रपरिष्कारान् शब्दखण्डे व्युत्पत्तिवादशक्तिवादौ धर्मशास्त्रादीनि शास्त्रान्तराणि च समधीतवान् । धीमत्तमेनाऽमुना बहुभ्यो गुरुभ्यो बहवो ग्रन्थाः समधीतास्तथाऽप्यस्य सारभूता शिक्षा श्रीमतो **बालशास्त्रिण** एव सविधे समपद्यत । स्वोक्तिरेवेयमसकृद्बहुभिः श्रुता श्रीमतः **शिवकुमारमिश्र**महोदयस्य वदतो मुखात् । इत्थमस्य भगवतीं वाग्देवतामाराधयतो विदुषो जीवनस्य षडधिकानि विंशतिवर्षाणि व्यतीयुः ।

इत्थं तत्तद्विषयमहितात् पण्डितानां समूहा—

लब्ध्वा तास्ताः सविधि सकलाः सद्य एवैष विद्याः ।

शेषे साक्षादिव सुरगुरोर्बालशास्त्रिप्रवर्या-
द्विद्यासारं समधिगतवान् सर्वविद्येश्वरोऽभूत् ॥ १७ ॥

ततश्च,

राकाशशाङ्कहिमकुन्दमृणालनाल-
कैलासकाशसदृशी जनिता ऽस्य कीर्तिः ।
व्याप्याऽखिलामपि धरामनवाप्तपारां
वाग्देवताश्रवणपूरपदं जगाहे ॥ १८ ॥

अथाऽसौ सर्वतो विसृत्वरसुयशोराशिः काशिकराजकीयपाठालयेऽध्यापकपदे नियुक्तोऽभूत् । चत्वारि वर्षाणि यावत्तत्र निर्विशङ्कं परिसहस्रं विद्यार्थिनो विविधानि शास्त्राणि पाठयतोऽस्य महापण्डितस्य केनाऽपि कारणविशेषेण श्रीमतो **'राइट्'** इत्याख्यस्य पाठशालाप्रधानाध्यक्षस्य समये तत् पाठशालीयमध्यापकदं परित्यजनीयमासीत् ।

ततः परं समुचितवृत्तेरभावेन क्लिश्यमानो मानोन्नतः पण्डितोऽयं कस्याऽपि धनिकस्य विवाहप्रसङ्गे वरपक्षीयो भूत्वा द्वावङ्गं जगाम । तत्राऽन्तर्यामिप्रेरणया साक्षादिव धर्मं विद्वज्जनकल्पद्रुमं तपोमयं पूण्यमूर्तिं सरलोदारस्वभावं तदानीन्तनं द्वारवङ्गाधीशं महाराज-**श्रीलक्ष्मीश्वरदेवं** ददर्श ।

यश्च,

दारिद्र्यं विदुषां गणस्य सुतरामामूलमुन्मूलयन्
कीर्तिं कामपि पार्वणेन्दुसदृशीं रम्यां वितत्याऽभितः ।
पुण्यश्रीः सहजस्मितोदयसमीचीनाननो भूपतिः
**श्रीलक्ष्मीश्वरदेव** इत्यनुगुणप्रख्यातनामा ऽभवत् ॥१९॥

अद्याऽपि यं सकल एव सतां समाजः
श्रद्धान्वितं स्मरति गद्गदकण्ठमुच्चैः ।
तं दातृतागुणसमीकृतकर्णराजं
स्तोतुं नृपं कविवरः कतमः प्रभुः स्यात् ॥२०॥

अद्याऽपि यस्य दयिता महिता सतीनां
**लक्ष्मीवती** विजयते खलु काशिकायाम् ।
यां देवतामिव परोपकृतिस्वभावां
मन्ये स्वयं भगवतीमिह वा ऽन्नपूर्णाम् ॥ २१ ॥

इत्थंविधस्य वसुधासुधाशनेन्द्रस्य श्रीमतो द्वारवङ्गाधीशस्य **लक्ष्मीश्वरदेवस्य** राजसभां गतोऽयं भूपेनाऽपि सबहुमानमादृत-स्तत्रत्यैरनेकैः पण्डितैः सह शास्त्रार्थविचारं विधाय महीपतेः पुरत एव 'पायाज्जटा घनघटा वृषभध्वजस्य' 'प्रविशति जलमध्ये शीतभीता मृगा-क्षी' इत्याद्यनेकाः समस्याः सद्यः सम्पूर्य सन्तोषितान्नरपतेः सहस्रमु-द्रात्मकं पारितोषिकमाससाद ।

अथैतदीयप्रतिभाप्रकर्षविलोकनविस्मिताऽन्तरो नरपतिर्ल**क्ष्मीश्वरदेवः** सबहुमानमेनं स्वसभापण्डितमकार्षीत् । तत्र पञ्चा-शन्मुद्रापरिमितं मासिकं लभमानो ऽसावसमानो वर्षमेकं यावत्कुटु-म्बेन सह द्वारवङ्गाधीशश्री**लक्ष्मीश्वदेव**स्योदाराश्रये न्यवसत् ।

अत्रान्तरे वदान्यशिरोमणिना श्रीमता **लक्ष्मीश्वरदेवेन** का-श्यां निवसते सर्वविद्यानिधानाय महाप्रभावाय प्रणतानेकमहीपति-मौलिलालितचरणयुगलाय वैराग्यशालिने श्रीमते **विशुद्धानन्द-**

**स्वामि**महोदयाय पञ्चशतमुद्रात्मकं मासिकं दित्सितमासीत् । मा-
सिकाङ्गीकाराय प्रार्थयामास च महीपतिः स्वामिवरम् । निवृत्तसम-
स्तैषणो धिषणधिषणोपमधिषणो यतिवरो ऽप्यात्मनस्तदनावश्यकतां
दर्शयन् तत्प्रत्याचख्यौ । तेन च सङ्कल्पितद्रव्येण काश्यामेकस्य
संस्कृतमहाविद्यालयस्योद्घाटनं, तेन च द्वारेण बहूनां पण्डितानां
जीवनोपायं च सूचयामास । गुणग्राहिचेता विद्वज्जनैकपक्षपाती श्री-
मान् **लक्ष्मीश्वर**देवोऽपि तत्तथेति बाढमङ्गीकृतवान् । इत्थं का-
श्यां 'द्वारवङ्गपाठशाला' सुस्थापिता ऽभूत् । यस्यां महामहोपाध्या-
य**सुधाकरद्विवेदि** महामहोपाध्याय**तात्याशास्त्रि**महामहोपा-
ध्यायश्रीमत्**प्रमथनाथतर्कभूषण**महोदयप्रभृतयो ऽध्यापकप्रव-
राश्चिरं पाठयन्ति स्म । लोकोत्तरप्रतिभाशाली सर्वशास्त्रावगाहिशेमुषी-
को ऽवतार इव भगवत्याः सरस्वत्याः सरलतरस्वभावो नैयायिकाग्र-
णीः श्रीमान् **सीतारामशास्त्रि**महोदयश्च यस्यां यावज्जीवनम-
ध्यापयामास ।

प्रायः काशिकपण्डितेषु सकला विख्यातसत्कीर्तयो
यस्यां सूरिवराश्चिरं विदधते स्माऽध्यापकत्वं स्फुटम् ।
**सीताराम**पदाङ्कताङ्किकवरो यत्रैव यावज्जनु-
श्चक्रे ऽध्यापकतां तृणीकृतसुराचार्यः सभाकेसरी ॥ २२ ॥

काशीवासैकलालसमानसो धार्मिकश्रेष्ठः श्रीमान् **शिवकुमार-
शास्त्रि**महोदयो ऽवसरमिममुपयुक्तमाकलय्य महाराजं **लक्ष्मीश्व-
रदेवं** प्रार्थयामास-"आश्रितकल्पद्रुम ! महाराज ! श्रीमत्पादकल्प-
तरुप्रच्छायशीतलं तलं समाश्रितवतो मम चिन्तामणिरप्यल्पीयान् प्र-

तिभाति, आश्रयान्तरविषये निरपेक्ष एवाऽहमिदानीं संवृत्तोऽस्मि, तथाऽपि काशीवियोगो मुहुर्मुहुर्दुनोति मम मानसम् , यदि सानुग्रहं काशीस्थायां श्रीमतः पाठशालायामहमध्यापकपदे नियुक्तो भवेयं तर्हि सफलो मे मनोरथो भवेत" इति । श्रीमान् धार्मिकाग्रसरो महाराजोऽपि काशीनिवासलालसामस्य विदुषो विलोक्य बाढं परितुष्टः सानन्दमनुमन्यते स्म काशीस्थद्वारवङ्गपाठशालायामस्याऽध्यापकत्वम् । अथ तत्र सुखेनाऽध्यापयन्नशेषोऽशेषशास्त्राणि सविशेषधीधिषणाविभवविस्मापितसमस्तविद्वत्तमः कालं सुखेनाऽनयत् ।

अथैषा द्वारवङ्गाधिपपाठशालात्मिका सुरभारती विदुषोऽमुष्य सम्बन्धेन शोभाविशेषं पुपोष ।

श्रीमत्पण्डितमण्डलीकुमुदिनीराकानिशानायकं
बादिव्रातकरीन्द्रदर्पदलने पारीन्द्रपोतोपमम् ।
दिग्दन्तिश्रुतिरन्ध्रपूरकयशःशुक्लीकृतेलातलं
लब्ध्वैनं मुमुदे बुधं **शिवकुमारं** पाठशाला भृशम् ॥२३॥

यावज्जीवनं तत्रैवाऽध्यापयता ऽनेन बहवश्छात्राः समध्यापिता लम्भिताश्च पण्डितमण्डले सविशेषमास्पदम् ।

श्रीमति **लक्ष्मीश्वरदेवे** दुर्दैवादखिलस्य धार्मिकवृन्दस्याऽसमय एव गतवति सुरलोकं द्वारवङ्गसाम्राज्यलक्ष्मीर्मधुकरमण्डलीव पुष्पात् पुष्पान्तरं श्रीमन्तं महामहिमशालिनं महाराजाधिराजं **श्रीरमेश्वरदेवं** भेजे । गुणग्रहणप्रवीणो महोदाराशयः श्रीमान् **रमेश्वरदेवोऽपि** शास्त्रिवरे सविशेषमादरं वहन् वेतनमस्य पञ्चाधिकसप्ततिमुद्रापरिमितं चकार । तावदेवानेन लब्धं यावज्जीवनम् । अन्यत्र विपु-

लवेतनां वृत्तिं सुलभामपि केवलं काशीवासैकलालसमानसः प्रत्याख्यातवानसौ । विहाय काशीं नाऽन्यत्र गन्तुमैहत ।

एकदा वर्तमानद्वारवङ्गाधीशमहाराजाधिराज**श्रीरमेश्वरदेवेन** कलिकातास्थे स्वकीये प्रासादे सम्राट्प्रतिनिधेः श्रीमतो **लार्डकर्झन**-महोदयस्य स्वागताभिनन्दनमहोत्सवश्चिकीर्षित आसीत् । तस्मिन्नवसरे काशीतः श्रीमान् **शिवकुमारशास्त्रि**महोदयोऽपि महाराजाधिराजादेशमनुरुन्धानस्तत्र गतवान् । उत्सवे तस्मिन् कलिकाताविश्वविद्यालयकुलपतिः प्रधानप्राड्विवाकः स्वर्गीयः श्रीमान् **सर आशुतोष-मुकुर्जी**महोदयोऽपि समागत आसीत् । महामहिम्नोऽस्य निर्देशेन तत्समक्षमेव श्रीमान् महामहोपाध्यायः **प्रथमनाथतर्कभूषण**महोदयः शास्त्रिवरं सविनयमप्राक्षीत् यत् ‘कलिकाताविश्वविद्यालयकुलपतयः सादरमनुरुन्धन्ति श्रीमन्तमत्रैव विश्वविद्यालये पञ्चशतमुद्रापरिमितमासिकवेतनमादाय समध्यापयन्तु श्रीमन्तः’ इति । आकर्ण्येदं धार्मिकप्रवरः शास्त्रिवरः **शिवकुमारः** स्वस्य काशीपरित्यागं दुःखातिरेकजकं कथयन् तां तथाविधामपि वृत्तिं निःशङ्कं प्रत्याचख्यौ ।

चमत्कृताश्च सर्वेऽपि तस्मिन्नुत्सवे सम्मिलिता महाजना विदुषोऽस्य लोकातिगया निःस्पृहतया प्रगाढया धर्मनिष्ठया च ।

वाग्देवतोपासनतत्पराणां
सदा स्वधर्मे निरताऽन्तराणाम् ।
वीतस्पृहाणां विषयेषु नूनं
न जातुचिद्याति मनो धनेषु ॥ २४ ॥

श्रीमान् बुधः **शिवकुमार**वरोऽपि तादृक्
लक्ष्मीं तृणादनधिकां कलयन् स्वचित्ते ।
काशीनिवासबहुलालसमानसोऽसौ
तत्याज वृत्तिमपि चाऽर्द्धसहस्रमुद्राम् ॥ २९ ॥

श्रीमतः शास्त्रिमहोदयस्य धार्मिकता तु शैशवादारभ्यैव लोकोत्तरैवाऽऽसीत् । प्रत्यहमसौ मणिकर्णिकातीर्थस्नानं काशीपतेर्भगवतो विश्वनाथस्य दर्शनं, श्रीमदन्नपूर्णामन्दिरे चण्डीसप्तशतीपाठं, नित्यश्राद्धं, गृहे च भगवतः शम्भोः पूजनमविच्छेदं नियमेनाऽऽचरति स्म।

शास्त्रार्थसभासु विचारमल्लतायामयमद्वितीय एवाऽऽसीत । नाऽऽसीत्कोऽपि तथाविधः पण्डितो य एनं शास्त्रविचारे पराजेतुमशक्नत् । असङ्ख्याता वादिनोऽनेन सभासु जिताः सन्तोऽमुष्य प्रत्युत्पन्नमतित्वेन प्रतिभाप्रकर्षेण च विमुग्धान्तःकरणाः शिष्यत्वमस्य भेजिरे ।

स्वर्गीयस्य सुगृहीतनामधेयस्य महामहोपाध्याय**श्रीकैलासचन्द्रशिरोमणि**पण्डितस्य माध्यस्थ्ये श्रीमता महामहोपाध्याय **रामधनतर्कपञ्चानन**महोदयेन साकमस्य शास्त्रार्थविचारः समजनिष्ट । ब्रह्मातिरिक्तस्याऽपि वस्तुनः सत्तां समर्थयन् द्वैतवादी पूर्वपक्षी श्रीमान् **रामधनतर्कपञ्चाननः** शाङ्कराऽद्वैतमतं समर्थयता श्रीमता **शिवकुमारशास्त्रिणा** पराजितः ।

इत्थमेव पञ्चाधिकत्रिंशन्मितवयसाऽमुना कश्मीरभूपालाश्रितो विक्रमपुरप्रधानपण्डितो महामहोपाध्याय**रासमोहनसार्वभौमो**ऽपि शास्त्रार्थविचारे पराजितः ।

ततः परं कश्मरिान् गतोऽसौ तत्रत्यानपि पण्डितान् निजबुद्धिविभवेन विस्मापयन् शास्त्रार्थविचारेषु वाचंयमान् विदधे ।

आलोक्याऽस्य तथाविधं निरुपमं वाक्कौशलं वैदुषीं
कश्मीराधिपतिर्महीसुरपतिः साश्चर्यचेताश्चिरम् ।
मत्वाऽमुं नरविग्रहां भगवतीं वाग्देवतामादरा-
न्नानोपायनराङ्कवांशुकशतैरानर्च रत्नैर्धनैः ॥ २६ ॥

इत्थं काशिकवैदुषीमनुपमां विख्यापयन् स्वौजसा
काश्मीरारुणतामपि स्वयशसा शुक्लत्वमापादयन् ।
नम्राऽनेकमहीपमौलिविगलन्माल्यार्चिताङ्घ्रिश्चिरं
श्रीमान् मानिवरो बुधः **शिवकुमारः** काशिकामागमत् ॥२७॥

श्रीमतो नाथद्वारमहापीठाधिपश्रीवल्लभाचार्यसम्प्रदायधूर्वहश्री**गोवर्धनलाल**महाराजानां पुरतः श्रीमता भारतमार्तण्डेन **गट्टूलालाख्येन** पण्डितेन्द्रेण सहाऽप्यस्य शास्त्रार्थविचारोऽभूत् । पूर्वपक्षी श्रीमान् **गट्टूलालो** विशिष्टाद्वैतमतं समर्थयितुमुपचक्रमे । शाङ्करद्वैतस्य पक्षपातिना ऽमुना पराजितः सोऽपि विश्वविजयी पण्डितः ।

गृहीतावतारस्येव साक्षात् कणादस्य महापण्डितस्य महामहोपाध्याय**श्रीराखालदासन्यायरत्न**महाशयस्योपरि तदीयपाण्डित्यप्रकर्षविलोकनविस्मितस्याऽस्य भूयसी श्रद्धा ऽऽसीत् प्रायस्तमसौ गुरुमिव सम्मनुते स्म ।

काशीस्थस्य प्रसिद्धस्य महायोगिनः श्रीमतो **भास्करानन्द**स्वामिनो जीवनचरितवर्णनपरं 'यतीन्द्रजीवनचरितं' नाम काव्यमेकमनेन निरमायि । यत्र प्रायः षड्दर्शनीगताः सर्वेऽपि पदार्थाः सरल-

रीत्या समुपन्यस्ताः पर्यवसाने ब्रह्माद्वैतसिद्धान्तोऽपि साधु समर्थितः । यच्च काव्यम्,

> एतद्वचःसुरतरुप्रभवं प्रसूनं
> विद्वद्वराऽलिकुलपीतमरन्दसारम् ।
> शब्दादिदर्शनविमर्शनशालिनोऽपि
> काव्येऽपि शक्तिमतुलां कथयत्यमुष्य ॥ २८ ॥

मुद्रितस्याऽस्य काव्यस्यैको भागो ऽमुना श्रीमते महामहिम्ने महामहोपाध्याय**महेशचन्द्रन्यायरत्न**महोदयाय सादरमुपहारीकृतः । विलोक्य तं भृशं परितुष्टो न्यायरत्नमहाशयः श्रीमता पण्डितराजेन कविसम्राजा महामहोपाध्याय**श्रीयादवेश्वरतर्करत्न**-महोदयेन सह स्वयं शास्त्रिवरस्य भवनं गत्वा ददर्शैनम् । ततः परं गुणग्रहिलस्य **श्रीमहेशचन्द्रन्यायरत्न**महोदयस्य प्रस्तावेन सम्राट्प्रतिनिधिना श्रीमते शास्त्रिमहोदयाय **महामहोपाध्याय** पदवी प्रदत्ता । अथाऽसौ तथाविधपदवीलाभेन,

> पाण्डित्येन सभासु वादिनिवहे सिंहोपमानो ऽप्यसौ
> वैदुष्योद्भवकीर्तिपूरभरिताऽशेषाऽवनीमण्डलः ।
> लब्ध्वा तां सुकृतेन मान्यपदवीं सम्राट्प्रदत्तां ततः
> शाणोल्लेखसमिद्धदीप्तिमणिवद्रेजे ऽथ पूर्वाधिकम् ॥ २९ ॥

अथैष "लक्ष्मीश्वरप्रताप" नामकमपरमप्येकं काव्यं प्रणिनाय । यत्र द्वारवङ्गाधीशराजकुलप्रथमपुरुषं श्रीमन्तं **महेशठक्कुर**मारभ्य वर्तमानद्वारवङ्गाधिपतिपर्यन्तं सर्वोऽपि राजवंशः सम्यग्वर्णितः । विलोक्येदमस्य काव्यं भृशं परितुष्टेन वदान्यशिरोमणिना श्रीमता **लक्ष्मी-**

श्वरदेवेनाऽस्मै द्विसहस्रमुद्रात्मकं पारितोषिकं सबहुमानं दत्तम् ।

शिष्येभ्यः पाठनाऽवसरे परिभाषेन्दुशेखरस्य टीकाऽपि कर्तुमारब्धा ऽऽसीदमुना ।

श्रीमतः **पूर्णचन्द्र दे** काव्यरत्न, बी० ए० महाशयस्यानुरोधेन शिवमहिमस्तोत्रीयकतिपयश्लोकानां टीका ऽप्यनेन निरमायि । किन्तु ग्रन्थद्वयमपीदं दुर्दैवान्न पूर्णतां गमितम् ।

वीरशैवसम्प्रदायानुगा लिङ्गधारणचन्द्रिका तु शास्त्रिवरेण निर्मिता मुद्रितैवाऽऽस्ते । नूतनग्रन्थनिर्माणाय सुहृद्भिश्छात्रैश्च साग्रहमनुरुद्धोऽपि शास्त्रिवर आधुनिकानां प्राचीनग्रन्थानामनुशीलने ऽसामर्थ्यं तेन च नवीनग्रन्थनिर्माणस्य वैफल्यं प्रतिपादयन् तत्र निरुत्साह एवाऽऽसीत् । प्राचीनग्रन्थेष्वपि प्रायो **गङ्गेशस्य** तत्त्वचिन्तामणावस्य भूयान् समादर आसीत् ।

श्रीमतः शास्त्रिवरस्य प्रकृष्टप्रौढपाण्डित्येन परितुष्टैः शृङ्गगिरिमहापीठाधिष्ठितै र्जगद्गुरुभिः श्रीशङ्कराचार्यैरमुष्मै **सर्वतन्त्रस्वतन्त्रपण्डितराज** इति पदवी तादृशपदव्यङ्कितं सुवर्णपदकं च सबहुमानं प्राऽदायि ।

**बामरा** महीपतिना च **अत्रैव विद्यारसः** इति पदाङ्कं सुवर्णपदकं श्रीमते शास्त्रिमहोदयाय सादरं वितीर्णम् ।

कलिकाताकान्यकुब्जसभया च **विद्यामार्तण्ड** इति पदवी सुवर्णपदकं च प्रदत्तं श्रीमते **शिवकुमारशास्त्रिमहोदयाय** ।

इत्थं नानाबिरुदनिकरैर्युक्तनामा ऽग्निधामा
कामारातेश्चरणकमले सर्वदा सक्तचेताः ।

ख्यातिं कां चित्सकलविबुधाऽलब्धपूर्वामुपेतः

साक्षाद्देवः शिव इव जनैः पूजितोऽभूद् बुधोऽसौ ॥ ३० ॥

एकदा पञ्चापप्रान्तीयलवपुरं गतोऽसौ शास्त्रिवरस्तत्रत्यै महाजनैः पण्डितैश्चाऽभूतपूर्वेण सन्नाहेन सम्मानित आसीत्।

धूमशकटादवतीर्य हयरथमारूढस्याऽस्य रथ्यान् संमोच्य स्वयमेव रथं वोढुमुद्यतान् अनेकान् पण्डितान् महाजनांश्च बद्धपरिकरान् दृष्ट्वा तेषां तथाविधश्रद्धातिरेकाऽवलोकनेन कौतूहलं कलयन्नप्यसौ धार्मिकोत्तंसस्तान् सनिर्बन्धं निवारयामास। स्वागताऽभ्यर्थनार्थं श्रीमन्महामहोपाध्याय**शिवदत्तदाधिमथ**प्रभृतयः पण्डितोत्तंसाः समुपस्थिता आसन्।

ततः परं लवपुरनागरिकैः हिंदूसभाया विशाले मण्डपे **सर अतुलचन्द्रचट्टोपाध्याय**महोदयस्य साभापत्ये श्रीमते शास्त्रिवराय सादरमभिनन्दनपत्रं प्रदत्तम्। तस्यां सभायां शास्त्रिमहोदयं सम्मानयितुं प्रधानप्राड्विवाकः जस्टिस् **सादीलाल,** आनरेबल राय **रामशरणदास**बहादुर C.I.E. लाला **हंसराज**प्रभृतयो लब्धप्रतिष्ठाः प्रकृष्टा नागरिका राजपुरुषाश्च समुपस्थिता आसन्।

श्रीमति **शिवकुमारशास्त्रि**महोदये जीवति सति सकलेऽपि भारतवर्षे धर्मशास्त्रीयव्यवस्थाप्रदानादिकं कार्यं प्रायस्तस्यैव परामर्शानुसारं प्रचलति स्म। अतीते युरोपीयमहायुद्धे मेसापोटेमियास्थाने शत्रुभिरवरुद्धे सति खाद्याभावेन बुभुक्षाक्षामकण्ठान् सैनिकान् अश्वमांसभक्षणाय सेनापतय आदिदिशुः। सैनिकास्त्वनभ्यस्तचरं तदननुमन्यमानास्तादृशमांसक्षणे प्रत्यवायशङ्कां प्रदर्शयन्तोऽवोचन् 'यदि

काशीस्थाः **श्रीशिवकुमारमिश्रा** इदं कार्यमनुमन्येरन् तर्हि वयमश्वमांसं निर्विवादं भक्षयिष्यामः इति । सेनापतिभिरपि तत्तथेति स्वीकृत्य **श्रीमच्छिवकुमारमिश्रा**भिप्रायज्ञानाय काशीस्थराजकीयसेनापतये राजशासनपत्रं प्रेषितम् । ततस्तत्तादृशपत्रानुरोधेन राजकीयसेनापतिमहोदयः श्रीमतः **शिवकुमारमिश्रस्य** सविधमुपेत्य हयमांसभक्षणव्यवस्थां पृष्टवान् । शास्त्रिमहोदयोऽपि परमापद्धर्मानुसारमश्वमांसभक्षणेऽप्रत्यवायमादिदेश ।

इत्थमनेकवारमनेकैः शास्त्रिमहोदयादेशेनैव शङ्कास्पदेष्ववसरेषु कर्तव्यं निरधार्यत । इह हि भारतवर्षे विशेषतः काशिकायामनेके महापण्डिता जाता जायन्ते जनिष्यन्ति च, तथाऽपि श्रीमतः **शिवकुमारमिश्र**महोदयस्य यादृशी सर्वाङ्गीणा लोकोत्तरताऽऽसीत् सा त्वभूतपूर्वैव, न ततः परं केनाप्यासादयितुं शक्येति निश्चयेन वक्तुं शक्नुमः । इत्थं लोकोत्तरगुणगणगौरवशाली विभूषणं सकलस्य भारतवर्षस्य विद्वद्वरः **शिवकुमारः** कालगतेरलङ्घ्यतया जराजर्जरवपुर्निधनात्पूर्वं त्रीणि वर्षाणि पक्षाघातवातविकाराभिभूतोऽपरिमितं कष्टमनुबभूव । स खलु महात्मा प्रारब्धकर्मभोगमिहैव समापितवानिति मन्यामहे । कतिचिद्दिनानि मणिकर्णिकातीर्थनिकटवर्त्तिनि अलवरनराधिपस्य शिवालये रोगशय्यागतोऽयं निहितोऽभूत्, परन्तु प्रावृट्काले समुपस्थिते भक्तवरमेनमुत्सङ्गमारोपयितुमिव महारयेण समागतां समुच्छलन्तीं भगवतीं भागीरथीं वीक्ष्य भीतैरतत्त्वज्ञैः परिचारकैस्तस्मात्स्थानादपनीय केदारघट्टनिकटस्थे ताहिरपुरनरेशप्रासादेऽसावनीयत । तत्र प्रायो मासद्वयमनेन तथाऽवस्थेनैवाऽस्थायि ।

रोगशय्यां शयान एव प्रत्यहं प्रातः श्रीमद्भागवतं शृण्वन्नसौ भावावेशेन रोदिति स्म ।

रोगपीडादुस्सहक्लेशोऽवशशरीरोऽप्यसौ प्रायः,

सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज ।

गङ्गा विश्वेश्वरः काशी जागर्त्ति त्रितयं यदि ।

तत्र नैश्रेयसी लक्ष्मीर्जायते चित्रमत्र किम् ॥

इत्यादिश्लोकान्पठन् अविरतं रोदिति स्म ।

शरीरत्यागात्पूर्वं द्वादशदिनानि यावदसौ प्रबलेन ज्वरेणाऽभिभूतः परं तप्यते स्म ।

बाणर्षिनन्देन्दुमिते १९७५ वैक्रमेऽब्दे सौरभाद्रमासस्य द्वितीयदिने शनिवासरे पूर्वाह्णे सार्द्धनवघण्टावादनवेलायां तत्याज पार्थिवं वपुः सकलपण्डितचक्रवर्त्ती श्रीमान् **शिवकुमारमिश्रमहोदयः** ।

बाणाऽश्वाङ्कशशङ्कसाम्मिततमे संवत्सरे वैक्रमे

सौरे भाद्रपदे द्वितीयदिवसे प्रातः शनेर्वासरे ।

दूनः संसृतिसम्भवैर्बहुविधै स्तापैः प्रतापाधिकः

पञ्चत्वं गतवान् बुधः **शिवकुमाराख्यः** सुविख्यातिमान् ॥ ३१ ॥

काशी शोकमलीमसा समभवद्विद्वद्वराणां गणो

बाष्पौघाप्लुतलोचनो विलपति स्मोच्चैरुरस्ताडयन् ।

वाग्देवी सुतशोकदीनवदना तत्याज वीणां निजा-

मन्तेवासिजनोऽपि साश्रु बहुलं चुक्रोश दुःखाऽन्वितः ॥ ३२ ॥

वैदुष्यं विलयं गतं बुधसभा शून्यां दशां लम्भिता

शास्त्रार्थो विरसोऽभवन्नवनवा लीनास्तु ताः कल्पनाः ।

शास्त्रं व्याकरणं तथाऽक्षचरणादिष्टं च सद्दर्शनं
यातं तत्सकलं गते **शिवकुमाराख्ये** बुधे तत्क्षणात् ॥ ३३ ॥
प्रत्युत्पन्नमतित्वमस्य विमलं विद्वत्सभासूच्चकै-
र्देवाचार्यसमानता सुविदिता सा सर्वविद्वन्मता ।
धर्मे स्वे दृढता च नास्तिकमतोच्छेदे परं कौशलं
स्मारं स्मारमिहाऽद्य चेतसि वयं दूयामहे केवलम् ॥ ३४ ॥
विद्वद्वृन्दमहेन्द्रताजुषि लसत्पाण्डित्यचण्डद्युतौ
ख्याते जीवति पण्डिते **शिवकुमाराख्ये** सुकीर्त्यङ्किते ।
नाऽऽसीत्कोऽपि तथाविधो नरपतिर्यो नाऽस्य पूजापरो
विद्वानप्यभवन्न कोऽपि च तथा यो नाऽस्य नम्रः पुरः ॥३५॥

शास्त्रिवराणां कुटुम्बे तेषामेकः पुत्रः **श्रीवाचस्पतिमिश्र**-नामा नितान्तसरलस्वभावो वर्तते, पौत्राश्च **जगन्नाथ, रघुनाथ, श्रीनाथा**श्चिरायुषो विद्यन्ते ।

श्रीमतां **शिवकुमारशास्त्रि**महोदयानां शिष्यास्तु प्रायः सकलमेव भारतवर्षमभिव्याप्य स्थिता असङ्ख्याता एव सन्ति, तेषां सर्वेषां नामानुकीर्तनं तु गीष्पतेरपि दुःशकं, किम्पुनर्मादृशाम् । तथाऽपि तेषु कतिपयान् सविशेषं विख्यातान् पण्डितोत्तमान् कीर्तयामः—

तत्र प्रथमतोऽशेषविद्वन्मण्डलीकुमुदिनीराकानिशानायकोपमाः प्राच्यप्रतीच्यविद्यासम्भेदमहातीर्थाऽवगाहननिर्मलधिषणा अनेकग्रन्थ-निर्माणसमुच्छलदच्छसुयशःस्तोमसोमधवलितदशदिङ्मुखाः परमेश्वरा-नुगृहीताः काशिकराजकीयपाठशालाप्रधानाध्यक्षचराः सम्प्रति प्रयाग-स्थविश्वविद्यालयकुलपतयः श्रीमन्महामहोपाध्याय डाक्टर **गङ्गानाथझा**

एम्०ए०डी०लिट्०एल्०एल्०डी०महोदयाः शास्त्रिवराऽधीतखण्डनखण्डखाद्यादिग्रन्थाः शिष्या एव शास्त्रिवराणाम्—

विद्यावंशयशांसि सन्ति विमलान्युच्चैस्तमं वैभवं
चेतः किञ्च दयाघनं विजयते येषां श्रियं पुष्णताम् ।
वाग्देवी सततं स्थितिं वितनुते यद्वक्त्रपद्मासने
पद्मा पाणिगतैव राजतितमां प्रीत्येव यत्सन्निधौ ॥ ३६ ॥

सौभाग्यं स्पृहणीयमेव सकलैर्वर्धिष्णु येषां सदा
पुत्राः किञ्च पवित्रचारुचरिता विद्वद्गणे संस्तुताः ।
नानाग्रन्थविधानजा निरुपमा कीर्तिश्च लोकोत्तरा
**गङ्गानाथ**पदाङ्कपण्डितवरा राजन्ति राजोपमाः ॥ ३७ ॥

श्रीमन्तः सकलशास्त्रार्थकोविदा विरचितमहनीयानेकनिबन्धा बुद्धिमत्तमाः प्रख्यातकीर्तयो जयपुरमहीमहेन्द्राश्रितास्तदीयप्रासादपुस्तकालयाध्यक्षा विद्यावाचस्पतयः **श्रीमन्मधुसूदनओझा** शर्माणोऽपि शास्त्रिवराणां शिष्या एव—

विख्याता बुधमण्डले सुरगुरुप्रख्यप्रतिष्ठाजुषः
प्रौढाऽनेकनिबन्धनिर्मितिभवत्कीर्तिप्रकर्षोज्ज्वलाः ।
वेदज्ञप्रवरा नृपाश्रयलसत्सौभाग्यसन्दीपिता
**ओझाश्रीमधुसुदनाख्य**विबुधा राजन्ति विद्वद्वराः ॥३८॥

श्रीमन्तो व्याकरणवेदान्तमीमांसाधर्मशास्त्रादिदर्शनेषु प्रौढव्युत्पत्तिशालिनो ऽध्यापकश्रेष्ठा वङ्गीयविद्वन्मण्डले **पाणिनि**रित्याभिख्याजुषः प्रथमे वैयाकरणाः शास्त्रार्थसमासु सविशेषं लब्धप्रतिष्ठा मारवाडीसंस्कृतमहाविद्यालयव्याकरणाऽध्यापकाः **श्रीहाराणचन्द्रभट्टा**-

**चार्यशर्माणो**ऽपि सविशेषमध्यापिताः शिष्याः श्रीमतां **शिवकुमारमिश्रमहोदयानाम्**—

काशीस्थनव्यबुधमुख्यपदाऽधिरूढा
वादाहवप्रथितधीविभवा बुधेन्द्राः ।
नानाविधागमविचारविधिप्रसिद्धा
**हाराणचन्द्र**इतिनामजुषो लसन्ति ॥ ३९ ॥

श्रीमन्तो वैयाकरणश्रेष्ठा द्वारवङ्गान्तर्गत**लोहना**ग्रामस्थश्री**रमेश्वर**देवसंस्थापितसंस्कृतविद्यालयप्रधानाध्यापकाः श्री**शिवशङ्करझा**शर्माणः पण्डितेन्द्रा अपि शास्त्रिवराणामेव शिष्याः—

विद्वद्गणे प्रथितनिर्मलकीर्तिभाजः
शब्दादिदर्शनविमर्शनसुप्रवीणाः ।
अध्यापकेन्द्र**शिवशङ्करझा**ऽभिधानाः
ख्याता जयन्ति विबुधाः सुधियामधीशाः ॥ ४० ॥

श्रीमन्तो मान्यवराः **श्रीरघुनाथझा**शर्माणोऽपि शास्त्रिवराणां शिष्या एव—

विद्वद्वरेषु विख्याता वैयाकरणधूर्धराः ।
**झोपाख्यरघुनाथाख्या** विजयन्ते विपश्चितः ॥ ४१ ॥

श्रीमन्तः पण्डितवरा वैयाकरणश्रेष्ठाः श्रोत्रियाः **सरिस**वग्रामे महाराज्ञीपाठशालाध्यापकाः श्री**दीनबन्धुझा**शर्माणोऽपि शिष्या एव शास्त्रिवराणाम्—

शब्दशास्त्रविदां वन्द्या विख्याता विदुषां गणे ।
**दीनबन्धु**पदाभिख्या **झोपा**ख्याः पण्डिता इमे ॥ ४२ ॥

श्रीमन्तः परिव्राजकश्रेष्ठाः पूर्वाश्रमे **दौलतराम**इतिनामधेयाः

सकलदर्शनविमर्शनप्रसिद्धा वेदान्तशास्त्रवाचस्पतयो वैराग्यविमलचेतसः प्रसिद्धस्य वदान्यशिरोमणे**र्गौरीशङ्करगोइनका**ऽऽख्यस्य वणिजो गुरवः **श्रीमदच्युताश्रममुन**योऽपि शास्त्रिवराणां शिष्या एव—

वेदान्तानुभवोल्लसद्विमलतावैराग्यविद्योतिताः

शास्त्रार्थे पटवः स्पृहाविरहिता ऐश्वर्यभोगादिषु ।

विख्याता विदुषां गणेऽच्युतमुनिश्रेष्ठाः प्रकृष्टश्रियो

**गौरीशङ्कर**मौलिलालितपदाम्भोजा जयन्ति भुवम् ॥ ४३ ॥

श्रीमन्तो वेदान्तनिपुणा लवपुरीय डी०ए०वी०विद्यालयाध्यापकाः **श्रीराजारामशास्त्रिणो**ऽपि शास्त्रिवराणां शिष्या एव—

वेदान्तविद्यानिष्णाताः शान्तचित्ताः सुधीश्वराः ।

जयन्ति पण्डिता एते **श्रीराजारामशास्त्रिणः** ॥ ४४ ॥

श्रीमन्तो वेदान्तमीमांसादिनिपुणा ग्रन्थप्रकाशनकर्मणा प्रसिद्धाः सुसम्पादितानेकदुर्लभग्रन्था **बाक्रे**-इत्युपाख्य**श्रीमहादेवशास्त्रिणोऽपि** शिष्या एव शास्त्रिवराणाम्—

अनेकदुर्लभग्रन्थसुसम्पादनकर्मठाः ।

विद्वांसः **श्रीमहादेवशास्त्रि**वर्या जयन्त्यमी ॥ ४५ ॥

श्रीमन्तो वैयाकरणाः शास्त्रार्थनिपुणा विद्वत्परिषन्मन्त्रिणः **श्रीरामावधि**शर्माणोऽपि शिष्या एव शास्त्रिवराणाम्—

काशीस्थविद्वत्परिषत्परीक्षा-

सम्पादनैकाधिकृताः प्रसिद्धाः ।

विद्वद्गणे वादकथासु शूरा

जयन्ति **रामावधि** पण्डितेन्द्राः ॥ ४६ ॥

अन्येऽपि **श्रीनन्दनझा** कर्णगढपाठशालाध्यापक**कन्तलाल चौधरी** लोहनापाठशालाध्यापकश्रोत्रिय**महावीरमिश्र**प्रभृतयः शास्त्रिवराणां प्रभूतपाण्डित्याः शिष्याः सन्ति, येषां सर्वेषां वर्णनं मादृशाल्पमेधसां दुष्करमिति परिहृतम् ।

अथ ये च विख्याता अपि सम्प्रति परलोकं गताः शास्त्रिवराणां शिष्यास्तेष्वपि कतिपयानुल्लिखामः—

श्रीमन्तः प्रचण्डपाण्डित्याः सर्वशास्त्राम्भोधिपारङ्गमा बृहस्पतिप्रतिभटाः शास्त्रार्थसभासु सविशेषख्यातिजुषो विद्वद्वरा महामहोपाध्याय**श्रीजयदेवमिश्र**शर्माणोऽपि शास्त्रिवराणां प्रधानशिष्या आसन् ।

नानाग्रन्थविधानजेन यशसा व्याप्याऽखिलं भारतं
विद्वत्संसदि गीष्पतिप्रतिमतां सम्पाद्य लोकोत्तराम् ।
अध्याप्य प्रचुरं विधाय बहुलान् विद्यार्थिनः पण्डितान्
सायुज्यं **जयदेवमिश्र**विबुधा विश्वेश्वरेणाऽऽप्नुवन् ॥४७॥

श्रीमन्तो न्यायवेदान्तादिनिष्णाता मतिमत्तमाःश्री**मदच्युतानन्दत्रिपाठि**महोदया अपि शास्त्रिवराणामेव शिष्या आसन—

न्यायवेदान्तनिपुणाः प्रख्याता विदुषां गणे ।
**अच्युतानन्द**नामानो बभूवुः पण्डितोत्तमाः ॥ ४८ ॥

श्रीमन्तो वैयाकरणाः पण्डितमण्डले लब्धप्रतिष्ठा अयोध्यावासिनो **निरीक्षणपातितिवारीति**नामधेया विद्वांसोऽपि शास्त्रिवराणां शिष्या एव—

अयोध्यामण्डले ख्याता विद्वद्वृन्दे प्रतिष्ठिताः ।
**निरीक्षणपती**त्याख्याः पण्डिता अभवन्नमी ॥ ४९ ॥

श्रीमन्तो द्वारवङ्गमण्डलान्तर्गत**पिलखवाड**ग्रामवासिनः काश्मी-

रराजाश्रित**बबुजनझा**शर्मणस्तनयाः पण्डितश्रेष्ठा महामहोपाध्याय **चुम्बेझा**शर्माणोऽपि शास्त्रिवराणां विशिष्टा एव शिष्या आसन्--

विख्यातकीर्तयो मान्या वैयाकरणधूर्धराः ।
**चुम्बेझा**नामका आसन् महोपाधिविभूषिताः ॥ ५० ॥

अन्येऽपि **रघुनाथशर्मगौडाः**, मीमांसकाः **श्रीगुरुचरणविद्याभूषणशर्माणः**, कलिकाताराजकयिसंस्कृतपाठशालाध्यापका **यामिनीनाथतर्कवागीशाः**, **बहुवल्लभशास्त्रिणः**, मधुबनी-पाठशालाभूतपूर्वाध्यापक**मुकुन्दझाशर्माणः**, **मुक्तिनाथझा**, **फूदनचौधरी**प्रभृतयोऽनेके प्रसिद्धाः शास्त्रिवराणां शिष्याः स्वर्गं गताः ।

बाणाऽष्टाङ्कशशाङ्कसम्मिततमे संवत्सरे वैक्रमे
राधे मासि सिते दले शनिदिने प्रातर्नवम्यां तिथौ ।
विद्वद्वृन्दपतेर्महीसुरगुरोः साक्षाच्छिवश्रीजुषः
पूर्णत्वं चरितं गतं **शिवकुमाराख्यस्य** सच्छास्त्रिणः ॥ ५१ ॥

अन्तर्यामिशिवादेशात्कृतेनानेन कर्मणा ।
श्रीमान् **शिवकुमारात्मा** प्रीयतां परमेश्वरः ॥ ५२ ॥

**श्रीगङ्गाधर**सद्गुरुप्रतिफलत्सारस्वतज्योतिषः
**श्रीरामा**ङ्घ्रिनिषेवणाप्तसुमतेः सन्तीर्णशास्त्राम्बुधेः ।
**श्रीमद्भैरवनायका**त्मजनुषः सद्धर्मलक्ष्मीजुषः
**श्रीनारायणशर्मणः** कृतिरियं विद्वन्मुदे जायताम् ॥ ५३ ॥

इतिश्री**खिस्ते**–इत्युपाख्य**नारायणशास्त्रिणा** प्रणीते **विद्वच्चरितपञ्चके** श्री**शिवकुमारशास्त्रि**चरितं नाम चतुर्थः परिच्छेदः ॥ ४ ॥



श्रीमन्महामहोपाध्याय श्रीरामकृष्णशास्त्री
(तात्याशास्त्री पटवर्द्धनः)

जन्मसंवत् १९०२ मृत्युसंवत् १९७६

विद्वत्कुलस्यालङ्कारो वैयाकरणधूर्धरः ।
तात्याशास्त्री विजयते रामकृष्णापराभिधः ॥

# श्री तात्याशास्त्रिचरितम् ।

अथ ब्रूमो जगन्मान्यवैदुषीशेमुषीजुषः ।
**तात्याशास्त्री**ति विख्यातविदुषश्चरितं परम् ॥ १ ॥

कुम्भोद्भवेन मुनिना चुलुकीकृतवार्धिना ।
अधिष्ठिता विजयते दक्षिणा दक्षिणाकृतिः ॥ २ ॥

विद्यातपोभ्यामभिदीप्यमाना
वसन्ति यस्यां किल भूसुरेन्द्राः ।
समिद्धवैश्वानरदीप्तिभाजां
मन्दायते ऽर्कः पुरतो ऽपि येषाम् ॥ ३ ॥

कृत्वा त्रिःसप्तवारं सकलनृपकुलध्वंसमुद्दण्डवीर्यः
कृत्स्नां क्षोणीं विजित्य प्रचुरगुणजुषे काश्यपाय प्रदाय ।
आत्मार्थं वह्निबाणैः सपदि जलनिधिं शोषयन् जामदग्न्यः
प्रापत्तस्मादकस्माद्वसतिहितमसौ शोभनं भूमिभागम् ॥ ४ ॥

यश्च,

अम्भोधेर्जठरे चिराय कलितावासस्तदन्तर्भव-
न्नानारत्ननिधानतामुपगतः प्रोद्यत्प्रवालच्छटः ।
खर्जूरीपनसाम्रदाडिमलसत्पूगालिशोभाधिको
देशः **कोङ्कण**नामको विजयते विश्वम्भराभूषणम् ॥ ५ ॥

यत्र,

जमदग्निसुतैकदैवतः
सरलोदारतरस्वभाववान् ।
कलिदोषविवर्जितो जनो
यमुपाश्रित्य निवासमञ्चति ॥ ६ ॥

तथाविधे **कोङ्कण**नाम्नि देशे
लब्धप्रसूतिर्गुणिगीतकीर्तिः ।
**श्रीकृष्णभट्टः पटवर्द्धनेति**-
विख्यातवंशेऽभवदग्रजन्मा ॥ ७ ॥

**पटवर्द्धन**वंशावतंसः **श्रीकृष्णभट्टो** निजसौभाग्यं परीक्षितुमिच्छन्निव **कोङ्कणात्** प्रचलितो **महाराष्ट्रदेश**मुपगम्य **सातारा** नामके नगरे निवासं कल्पितवान् । तत्र महीभृच्छिखरोपरि विराजमाने ऽभ्रंलिहे मन्दिरे भक्तजनमनोरथपरिपूरणाय निरन्तरविरचितावासां भगवतीं पार्वतीमारिराधयिषुरसौ तत्रैव दुश्चरं तपश्चचार।

प्रसन्नायाः परमेश्वर्याः सकाशादभीष्टं वरं लब्ध्वा भवानीचरणारविन्दमकरन्दास्वादनमिलिन्दं यवनोच्छेद्यमानसनातनवैदिकधर्मसंरक्षणाय धृतकङ्कणं सङ्ग्रामघस्मरप्रतापानलदग्धवैरिवृन्देन्धनं गृहीतविग्रहमिव साक्षाच्छिवं श्रीम**द्रामदास**सद्गुरुचरणानुगृहीतं पुण्यमूर्त्तिं छत्रपतिं महाराष्ट्रसम्राजं **श्रीशिवाजीनामकं** महीमहेन्द्रं द्रष्टुं तदीयां राजधानीमुपेत्य परिपाकोन्मुखसुकृततिमहिम्ना ऽनायासेन महीपतेर्दर्शनं प्राप्य तपःप्रभावसन्तोषिताया अम्बिकाया वरप्रदानमहिम्ना सद्य एव राजवल्लभतामुपाजगाम ।

अथ तत्र नरपतेश्चित्तमनुवर्तमानः सेवमानश्च तं मानधनोऽसौ गुणग्राहिणा **शिव**भूपतिनाऽपि यथोचितां वृत्तिं लम्भितः सुखमुवास । वेदवेदाङ्गविदो विप्रस्याऽप्यस्य साङ्ग्रामिकेषु सन्धिविग्रहादिराजनीतिकर्मकलापेष्वपि विलक्षणं नैपुण्यं निपुणं निरीक्ष्य सविशेषं परितुष्टः **शिवभूपति**रमुं नागपुरप्रान्तीयराज्यव्यवस्थासम्पादनाय श्रीमता **रघोजीभोसले** इत्याख्येन नरपतिना सह नागपुरं प्राहिणोत् । तत्राऽपि निजबुद्धिविभवेन महीपतेर्विश्वसनीयतामासाद्य राजकीयकोशप्रधानाध्यक्षपदे न्ययुज्यत ।

इत्थं तत्र तथाविधं पदमधितिष्ठताऽनेन महीपतिं प्रकृतिमण्डलं च सममेव सन्तोषयता प्रभूता कीर्तिर्वित्तं चाऽर्जितम् ।

कालवशं गते तस्मिन् तदीयधर्मपत्न्या **बचाबाई** नाम्न्या स्वपत्युर्नाम्ना नागपुरे कृष्णेश्वरः शिवः प्रतिष्ठापितः । योऽद्यापि नागपुरे **कृष्णभट्टपटवर्धनस्य** कीर्तिगौरवमुल्लासयन्नास्ते ।

अथ कालक्रमेण **कृष्णभट्टस्य** भ्रातृस्नुषा **बहिणाबाईति**नामिका विधवा प्रभूतं वित्तमादाय नागपुरात्प्रचलिता सती काशीनिवासेच्छया काशीमाजगाम । काश्यां च गङ्गातीरे दुर्गाघट्टनिकटे सुदृढानि भवनानि निर्माय तत्र सुखेन विहितवसतिरसौ तत्रैव बालकृष्णेश्वरनामकं शिवं संस्थाप्य तदायतनमपि सुदृढं निर्मितवती । यावज्जीवनं गङ्गातीर एव निवसन्त्या तया शेषमायुरत्यवाह्यत । इत्थमनेन क्रमेणैव प्रकृतचरितनायकवंशः काशीवासी समजनिष्ट ।

**बहिणाबाई**नामिकाया विधवाया देवरो **बालकृष्णभट्ट**नामाऽऽसीत् स एव प्रकृतचरितनायकस्य प्रपितामहः ।

**भट्टबालकृष्णपटवर्द्धनस्य भट्टनारायण**नामा पुत्रो ऽभूत् । अयमेव पितामहः प्रकृतचरितनायकस्य । **भट्टनारायणश्च** पुत्रद्वयं लेभे । तत्र प्रथमः पुत्रो **महादेवभट्ट**नामा **बालंभट्टा**पराभिधानः पराक्रमी समजनिष्ट। अयमेव चरितनायकस्य जनकः। द्वितीयः पुत्रो **भट्टनागेश्वरश्च**रितनायकस्य पालकः पितृव्यश्चाऽऽसीत् ।

अथ **बालंभट्टा**ऽपराऽभिधानो **महादेवभट्टः** स्वपूर्वजपरम्परामनुवर्त्तमानो मध्यप्रान्तवर्तिनि **नागपुरे** नगरे निवसन् कुलक्रमागतां नागपुराधीशकोशाध्यक्षवृत्तिमनुतिष्ठन् द्वादशशतीं च मुद्रिकाणां प्रत्यब्दं लभमानः सुखेन गार्हस्थ्यमाचरन्नवसत् ।

कालक्रमेणाऽस्य स्वोपास्यस्य शम्भोरनुग्रहात् द्वौ तनयावभूताम् ।

तत्र प्रथमः पुत्रः **केशवनामा** चरितनायकस्याऽग्रजः समजनिष्ट । द्वितीयपुत्र एव प्रकृतचरितनायकः **श्रीरामकृष्णशास्त्र्यपराख्यस्तात्याशास्त्री** ।

अथाऽस्माकं चरितनायकः श्रीमान् **रामकृष्णस्तात्याशास्त्रिपटवर्द्धनो** नागपुरे द्विव्योमनन्देन्दु १९०२ मिते वैक्रमे ऽब्दे आषाढे शुक्लपक्षे त्रयोदश्यां बुधवासरे जन्म लेभे ।

वागीश्वरः स्कन्द इवेश्वरस्य
क्षीराम्बुधेरिन्दुरिव प्रपूर्णः ।
जातो **महादेवबुधस्य** सूनु-
**स्तात्या** ऽपराख्यः खलु **रामकृष्णः** ॥ ८ ॥

कुलद्वयस्योज्ज्वलतां विधातुं
श्रीरामकृष्णांश इवाऽवतीर्णे ।

**श्रीरामकृष्णा**भिधशास्त्रिवर्ये
सुपुष्पवृष्टिर्नभसः पपात ॥ ९ ॥

इत्थं शुभोन्नतग्रहगणपूर्णे शोभने मुहूर्ते लब्धजन्मा कुमारो **रामकृष्णो** वैदिकप्रवरेण जनकेन जातकर्मादिसंस्कारैः संस्कृतः पूर्वाधिकसमुज्ज्वलश्रीर्वर्द्धमानो लाल्यमानश्च पितृभ्यां बालकेलीरनुभवन् शीतांशुरिव धवले दले प्रतिदिवसमुद्यत्कलाप्रकर्षो ववृधे ।

सार्द्धद्विहायनावस्थ एवाऽसौ दुरदृष्टात् परिपाकोन्मुखात् मातुः पितुश्चाऽकालनिधनेन सर्वथाऽसहायावस्थां गतः पितृव्यभट्ट**नागेश्वरेण** स्वसमीपमानीय तनयनिर्विशेषं प्रत्यपालयत ।

दुरदृष्टं हि न क्वचिदप्येकलमुपतिष्ठते 'विपद्विपदमनुबध्नाती'ति नियमानुसारेणाऽऽपदन्तरेण सहैवाऽऽपतति । कुमारो **रामकृष्णः** सहैव पित्रोर्वियोगेन दारिद्र्यदुरवस्थामप्यन्वभूत् । पितु**र्महादेवभट्टस्य** समयपर्यन्तमक्षुण्णं प्रचलिता राजतमुद्राणां द्वादशशती वार्षिकी वृत्तिश्चतुष्पञ्चादशधिकाष्टादशशततमे १८५४ ख्रीस्ताब्दे नागपुरराज्ये आंग्लमहीपालच्छत्रच्छायायामुपागते ऽर्द्धात्मना ऽवस्थिता । षट्शतान्येव राजतमुद्राणां ततः परं लप्स्यन्ते इति राजशासनमुद्घोषितमभूत् । तत्राऽप्यर्द्धं शतत्रयं पितृव्यस्य **नागेश्वरभट्टस्यै**वांश आसीत् । अवशिष्टे शतत्रये सार्द्धशतं **रामकृष्णा**ग्रजस्य **केशवस्यांऽशो** गतम् । इत्थं सार्द्धैकशतमेवाऽस्य वार्षिकवेतनं जीवनौपयिकमासीत् ।

पितृव्यः श्रीमान् **नागेश्वरभट्टस्तु** शैशव एव जनकजननीविरहितं निसर्गचपलं बालमेनं सविशेषस्नेहं पालयन् 'प्रसादचिह्नानि पुरः फलानि' इति दिशा बाल्यएवाऽस्य बुद्धिप्रकर्षमालोक्य विस्मि-

ताऽन्तरो भविष्यन्तं पण्डितेन्द्रममुं निश्चिन्वन् भृशं मुमुदे ।

अथाऽसौ पञ्चहायनावस्थ एव नागपुरे भाषाशिक्षागुरोः पाठालये प्रवेशितस्तत्राल्पेनैव कालेन निजधीविभवेन भाषाशिक्षां समापितवान्।

अत्राऽन्तरे भट्ट**नागेश्वरेण** स्वात्मनैव सहाऽऽनीतो ऽसौ शिवराजधानीं काशिकाम् ।

या च—

विद्वत्कुलप्रसवभूमिरिति प्रसिद्धा
कैलासतः प्रियतरा शिवराजधानी ।
यस्याः पदाब्जनिकटे विलुठत्यजस्रं
मन्दाकिनी शिवशिरोवरवैजयन्ती ॥ १० ॥

यद्वासिनो नरशरीरभृतो ऽमरेन्द्रा
आकण्ठमम्बु परिपीय सुरस्रवन्त्याः ।
नेच्छन्ति जातुचिदमी मनसा सुधां तां
रम्भादिदेववनिताऽधरमाधुरीं वा ॥ ११ ॥

इत्थंविधायां काशिकायामुपागतोऽसौ पितृव्यस्यैव सदने सहैव तेन सुखं न्यवसत् ।

अथ पितृव्यो **भट्टनागेश्वरो** ऽष्टवर्षदेशीयमेनं विप्रोचितेनोपनयनसंस्कारेण संस्कृत्य ग्राहयामास भगवतीं सावित्रीम् ।

विरिञ्चिकल्पाज्जनकानुजाता-
ल्लब्ध्वैष विद्यां सवितुर्वरेण्याम् ।
निसर्गसुश्रीरपि शाणघृष्टो
मणिर्यथा भूरि रराज बालः ॥ १२ ॥

अथ पुनरपि कार्यविशेषवशेन नागपुरं गच्छन् पितृव्यो ऽमुमपि सहैवाऽऽत्मना निनाय । तत्राऽसौ सुप्रसिद्धतमाद्विद्वद्वरात् **खरे** इत्युपनामकात् कस्माच्चिदपि शास्त्रिवरात् कोशकाव्यादि समधीते स्म । इत्थमसौ चतुर्दशहायनावस्थः कोशकाव्येषु च लब्धप्रवेशः पुनरपि पितृव्यसहित एव काशीमाजगाम । ततः काश्यां वर्षद्वयं यावत् वेद-कर्मकाण्डाद्यभ्यासं विदधता ऽनेन बुद्धिमत्तमेन तावदवस्थैनैव सहृद-यानां विदुषां मनः समाचकृषे ।

ततः परं षोडशहायनावस्थो ऽसौ समधिकपिपठिषाऽऽकुलचेताः सुचेतास्**तात्याऽपरा**ऽभिधानो **रामकृष्ण**स्तात्कालिककाशिकवि-द्वन्मण्डलाखण्डलं कलिकालप्रभावलुप्तप्रायशास्त्रमर्यादासमुद्धरणाय धृ तकङ्कणं पुण्यमूर्तिं यायजूकं श्रीमन्तं **रानडोपाख्यं बालशास्त्रि**-णमुपजगाम ।

सविनयं कृतप्रणामो व्यजिज्ञपच्च तं महात्मानमध्यापनादिना ऽनुग्रहं विधातुम् । महोदाराशयः शिष्यजनैकवात्सल्यनिधिः **श्रीबा लशास्त्रिवरो**ऽपि तत्तथेत्यमुष्याभ्यर्थनामङ्गीचकार ।

शोभने मुहूर्ते समारब्धो ऽस्य सिद्धान्तकौमुदीपाठः । अथाऽन-वरतमगणितकायक्लेशमधीयानो ऽसौ सद्गुरोराशीर्वचनप्रभावादात्मनो निरुपमधिषणाबलाच्च द्वादशवर्षोल्लङ्घनीयमध्वानं षड्भिरेव वर्षैरतिच-क्राम । कृत्स्नं सपरिष्कारं व्याकरणं तावतैव समयेनाधीतवता ऽनेन धीमच्छिरोमणेर्गुरोरपि विस्मयो जनितः ।

अथाऽस्य दिने दिने वर्द्धमाना पाण्डित्यलक्ष्मीर्दुर्वादिनां हृदयेषु

कम्पं जनयन्ती तात्कालिककाशिकपण्डितमण्डले ऽमुं सविशेषमास्पदं लम्भयति स्म ।

वेदान्तधर्मशास्त्रादिशास्त्राण्यपि सरहस्यमध्यापितो ऽसौ धराऽमरगुरुणा गुरुणा सर्वशास्त्रावगाहिशेमुषीकः प्रकृष्टं पाण्डित्यं भेजे ।

इत्थं श्री**बालशास्त्रि**प्रवरगुरुवराच्छब्दशास्त्रं समग्रं
वेदान्तं धर्मशास्त्रं कपिलमुनिगिरां चाऽपि लब्ध्वा रहस्यम् ।
प्रीत्या दत्ताऽभयाशीर्गुरुवरचणैर्मूर्ध्नि विन्यस्तपाणिः
श्रीमान् विद्वद्वरेण्यः सपदि विरुरुचे **रामकृष्णो** वितृष्णः ॥१३॥

अथैष सर्वतः प्रसृमरविमलयशाः पण्डितसभासु सादरमाहूतः स्वकीयवाक्पाटवेन वैतण्डिकानां मुखानि मुद्रयन् महतीं प्रतिष्ठामलभत ।

प्राप्तकालं सर्वोपकारक्षमं गृहस्थाश्रमं वितन्वन्नसौ द्वारवङ्गाधीशैः **श्रीलक्ष्मीश्वरदेवैः** सबहुमानमभ्यर्थितस्तदीयकाशिकद्वारवङ्गपाठशालायामध्यापयामास ।

तत्र सविशेषमध्यापयता ऽनेन बहवो मैथिलाश्छात्राः समध्यापिता लम्भिताश्च पण्डितमण्डले महतीं प्रतिष्ठाम् ।

इत्थं चिरं पाठयतो विदो ऽस्य
कीर्तिर्जगत्यां प्रसृता बभूव ।
छात्रैरनन्तैरुपगीयते स्म
लोकोत्तरा ऽध्यापनरीतिरारात् ॥ १४ ॥

अथ लोकोत्तरजगद्विश्रुततत्पाण्डित्यप्रकारश्रवणजनितविस्मयो विद्वत्पक्षपाती तात्कालिकः काशिकराजकीयपाठालयप्रधानाध्यक्षः श्रीमान् डाक्टर **थिबो**साहिबमहाशयः सबहुमानमेनमाहूय काशिकराजकी-

यपाठालये व्याकरणसाङ्ख्ययोगादिदर्शनाध्यापकदे न्ययुङ्क्त । इत्थं सौभाग्येन समुचिते पदे नियुक्तोऽयं पण्डितोत्तंसस्तत्र सङ्ख्यातीतान्तेवासिनो विविधानि शास्त्राणि सविशेषं व्याकरणमध्यापयन्नध्यापकश्रेष्ठः प्रकृष्टां प्रतिष्ठामाससाद ।

एतत्सम्बन्धेन काशिकराजकीयपाठशाला पुपोष सविशेषां सुषमाम् ।

**बापूदेव**बुधेन्द्रमौलिकलिता **कैलासचन्द्रा**नना
श्री**दामोदर**सूरिसिंहसहयुग्**गङ्गाधरां**सोन्नता ।
ख्याताऽनेकविपश्चिदञ्चितवपुः श्री**रामकृष्णो**ल्लस–
ल्लक्ष्मीः काशिकराजकीयसुरगीःशाला बभासे तदा ॥१५॥

पण्डितेन्द्रेणाऽमुना ऽध्यापिता असङ्ख्याताः सङ्ख्यावन्तो भारतवर्षे प्रायः सर्वत्रैव विराजन्ते, विशेषतो मैथिलाश्छात्रा अमुष्माल्लब्धविद्या वैयाकरणश्रेष्ठा अलङ्कुर्वन्ति विद्वन्मण्डलम् । परिशेषे तेषु सविशेषविद्यावतां कतिपयानां नामानि कीर्त्तयिष्यामः ।

विद्वद्वरस्याऽस्य पाण्डित्यमिव धर्मप्राणताऽपि लोकोत्तरैवाऽऽसीत् । काश्यां दुर्गाघट्टे 'गङ्गायां घोषः' इति प्रसिद्धलक्षणोदाहरणानुरूपमेवाऽस्य सुदृढं भवनमासीत् । यत्र सर्वदा निवसता ऽनेन यावज्जीवनं जाह्नवीजलकणवाही पावन एव पवनो निषेवितः । लोचनाभ्यामनवरतं स्फटिकशिलाभङ्गविमलानां उन्मज्जज्जलजन्तुविक्षोभितानां हरशिरश्चन्द्रशैशवकेलिसचिवानां हरिचरणनिर्णेजनजलानां भागीरथीकल्लोलानां विलास एव विलोकितः । सुधामाधुरीमप्यधरयतां भवरोगभेषजानां मन्दाकिनीपाथसामाचमनमेव येनाऽकारि यावज्जीवनम् ।

प्रत्यहमविच्छेदेन महति प्रत्यूषे पञ्चगङ्गातीर्थे निर्वर्तिताभिषेको ऽयमपाप्मा काञ्चनगौरवपुः सन्ध्यातर्पणादिब्राह्मणोचितक्रियाकलापान् निर्वर्त्तयन् हुताऽग्निको ऽग्निकल्पः शिवाराधनैकव्रतो महामनाः सभासु गुरुरिव नक्षत्रमण्डले व्यद्योतत ।

न केवलमयं विशिष्टः पण्डित एवाऽऽसीदपि तु व्यवहारे ऽप्यसाधारणा ऽस्य धिषणा विस्मयं जनयति स्म विदुषां चेतसि ।

बहूनि वर्षाणि यावत् स्वगृह एव मुद्रणयन्त्रालयमपि प्रवर्तयता ऽनेन बहून् शास्त्रीयान् ग्रन्थान् प्रकाशयता विदुषां विद्यार्थिनां च सुमहानुपकारो ऽप्यकारि ।

राजकीयाऽधिकरणेषु व्यवहारनिपुणता ऽप्यस्य प्रेक्षावतामपरोक्षैवासीत । कूटनीतिनिष्णाता अप्यनेके व्यावहारिकाश्चाणक्यमपि शिक्षयितुं समर्थस्यास्य बुद्धिवैभवमनुभूय विस्मयेन मुखकमलेष्वङ्गुलिनालानि दुदुः ।

एतन्निर्मितिषु परिभाषेन्दुशेखरस्य **भूति** नामिका टीका विश्वविश्रुतैवाऽऽस्ते । साम्प्रतिकेषु वैयाकरणेषु नाऽस्ति कोऽपि तथाविधो येन नोपासिता भूतिः । किं बहुना, भूत्यैव भूतिमन्तो ऽधुनातनाः पण्डिताः सन्ति । अभूतयस्त्वभूतय एवेति किं वक्तव्यम् ।

या च **भूतिः**,

शम्भोर्नागेशनाम्नो गहनतरगिरां मर्म सम्यक् प्रकाश्य
प्रौढ्या सम्सम्प्रदायागतमखिलमलं ख्यापयत्यर्थजातम् ।
विद्यार्थिव्रातमाता कठिनतमपरीक्षाऽब्धिपोतायमाना
**तात्याशास्त्री**न्द्रकीर्तिर्जगति विजयतां भासते यावदर्कः ॥१६॥

इयमस्य टीका भूतिरनेकवारं मुद्रिता कामधेनुरिवाऽस्मै प्रचुरमर्थं ददाति स्म । मुद्रितानि च टीकान्तराण्यतिशयाना ऽसावद्याप्य-स्य वंश्यानामन्तिके निधिरिवाऽव्ययो विराजते ।

शब्देन्दुशेखरस्याऽपि टीकाऽनेन विरचिता ऽऽस्ते, परन्तु सा न मुद्रितेति न वयं तदवलोकनभागधेयं भजामः ।

इत्थंविधानेकनिबन्धरत्न-
निर्माणजा लोकविलक्षणैव ।
राकाशशाङ्कप्रतिमा ऽस्य जज्ञे
कीर्तिर्जगत्यामसमा बुधस्य ॥ १७ ॥

ततः परमेतदीयप्रकृष्टपाण्डित्यप्रभावाकर्णनपरितुष्टेन भारतसम्राट्-प्रतिनिधिनाऽमुष्मै नन्दव्योमाङ्कशशाङ्कसम्मिते १९०९ खीस्ताब्दे **महामहोपाध्याय**पदवी प्रदीयते स्म ।

सम्राट्प्रदत्तदुरवापमहामहोपा-
ध्यायेतिमान्यपदवीं समवाप्य धीमान् ।
विद्योतते स्म विदुषां सदसि प्रसिद्ध-
**स्तात्या**ऽपराऽऽख्य **पटवर्द्धनरामकृष्णः** ॥ १८ ॥

दुर्गाघट्टे गङ्गाप्रवाहनिकटएवाऽनेन स्वपूर्वजप्रतिष्ठापितबालकृष्णेश्वरमन्दिरस्य पुरोभागे ऽभ्रंलिहो महान् प्रासादो निर्मापितो वर्तते । यमवलोक्य जनाः कौतुकेन 'पटवर्द्धनदुर्गः' इत्येव व्याहरन्ति ।

इह हि संसारे जन्मजुषां प्राणिनां सुखदुःखे हि स्वभावत एव पर्यायेण समुपतिष्ठेते । पण्डितोत्तंसः श्रीमान् **तात्याशा**स्त्रिवरोऽपि तस्यैव नैसर्गिकनियमस्य लक्ष्यतामापेदे ।

श्रीमतः शास्त्रिवरस्य ज्येष्ठस्तनयः श्रीमान् **पटवर्द्धननारायणशास्त्रीति** नाम्ना बभूव । यः खलु व्याकरणाचार्यः साहित्यसाङ्ख्यवेदान्तादिष्वपि निपुणो विरचितमुद्रितानेकनिबन्धः प्रख्यातयशाः पितुरनुगुण एवाऽऽसीत् । व्योमषडङ्कशशाङ्कमिते १९६० वैक्रमेऽब्दे ऽकस्मादेव स जगाम पञ्चत्वम् ।

निरन्तरवेदान्तचिन्तनदान्ताशयः शास्त्रिवरस्तादृशमपि शोकशङ्कुं विवेकाङ्कुशेन समुत्पाटयामास ।

नैतावताऽपि दुरदृष्टं परितुष्टं बभूव । शास्त्रिवरस्य द्वितीयः पुत्रो व्याकरणतीर्थः पण्डित **बालकृष्णशास्त्र्य**पि वार्द्धके पितरमनवलम्बं वितन्वन् वह्निहयनन्देन्दुमिते १९७३ वैक्रमेऽब्दे सुरपुरातिथिरभूत् । अयमपि शोकः शान्तचेतसा प्रवयसा शास्त्रिवरेण तथैव सोढः ।

इत्थमनेकैः पारिवारिकैर्दुःखैरभिभूतो जराजर्जरवपुश्चतुरधिकसप्ततिवर्षवयाः श्रीमान् **तात्याशास्त्र्य**पराभिधानो **रामकृष्णशास्त्री पटवर्द्धनो** यावज्जन्म कृतस्य तपसः प्रभावात् षडश्वाङ्कशशाङ्कसंमिते १९७६ वैक्रमे ऽब्दे फाल्गुनशुक्लतृतीयायां प्रातः कृतनित्यक्रियो ऽक्लेशेनैव तत्याज पाञ्चभौतिकं वपुः ।

षड्वाहाङ्कशशाङ्कसम्मिततमे संवत्सरे वैक्रमे
मासे फाल्गुनसंज्ञके सितदले प्रातस्तृतीयातिथौ ।
**तात्याशास्त्र्य**पराऽभिधो बुधवरः **श्रीरामकृष्णा**ह्वयः
सायुज्यं समुपागमद्भगवता विश्वेश्वरेणादरात् ॥ १९ ॥
विद्वांसो निरुपाश्रयाः समभवन् तेषां धुरीणे गते
विद्या शोकमलीमसा न रुरुचे प्रावृट्शशाङ्को यथा ।

छात्रौघो विललाप दीनवदना काशी चकाशे न सा

**तात्याशास्त्र्य**पराभिधे बुधवरे **श्रीरामकृष्णे** गते ।२०॥

श्री**बालशास्त्रि**गुरुवर्यविशिष्टशिष्ये-

ष्वेषो ऽन्तिमो ऽभवदसीममतिप्रकर्षः ।

अस्मिन् गते नवपरिष्कृतशब्दशास्त्रं

रुद्धोन्नति प्रतिदिनं कृशतामुपैति ।। २१ ॥

श्रीमतां शास्त्रिवराणां देहावसानसमये द्वौ पुत्रावास्ताम् । एको व्याकरणाचार्यो **ढुण्ढिराजशास्त्री पटवर्द्धनः** शास्त्रिवराणां निधनाद्वर्षत्रयात् परमेव पञ्चत्वमाप । अपरो **धीरेश्वरशास्त्रिशर्मा** सर्वतः कनिष्ठः पितुः प्रियतमो लालितः पुत्रो यथाशक्ति स्वकुलगौरवं रक्षन् विराजते ।

श्रीमतां शास्त्रिवराणां शिष्यास्तावदखिलं भारतवर्षमभिव्याप्य स्थिता वर्त्तन्ते । तेषां सर्वेषां नामानुकीर्तनं दुःशकमिति तेषु कतिपयानां सविशेषविद्याजुषां नामानि कीर्त्तयामः—

श्रीमन्तो मान्यवराः पण्डितेन्द्रा वैयाकरणशिरोमणयः प्रख्यातयशसो महामहिमशालिनो मुजफ्फरपुरराजकीयसंस्कृतविद्यालयप्रधानाध्यापका महामहोपाध्यायश्री**शशिनाथझा**शर्माणो मनीषिणः शास्त्रिवराणां प्रधानशिष्या एव—

विद्वत्संसदि वागधीशसदृशाः प्रौढप्रतिष्ठाजुषो

नानाशास्त्रविचारकर्मकुशला अध्यापकेषूत्तमाः ।

शास्त्रे व्याकरणे परिष्कृतियुते लोकोत्तरश्रीयुताः

श्रीमन्तः **शशिनाथझा**ऽऽख्यविबुधा राजन्ति विद्वद्गणे ॥२२॥

श्रीमन्तो वैयाकरणश्रेष्ठाः शास्त्रान्तरेष्वपि प्रविष्टमतयोऽध्यापन-निपुणताप्रथितकीर्तयः सरलस्वभावाः सत्यतपोदमान्विता मितभाषिणः सत्ययुगपुरुषा इव पुण्यशीला गोइनकापाठशालाध्यापका व्याकरणाचार्याः **श्रीरामयशस्त्रिपाठि**शर्माणोऽपि शास्त्रिवराणां शिष्या एव—विख्याता विदुषां गणे सुयशसश्छात्रैरनन्तैर्वृताः

शान्ताः सत्यसमेधमानसुषमाः स्वाचारधूर्धारकाः ।
विद्यागौरववैदुषीसुविनयैर्लोकातिगाः पण्डिताः
श्रीम**द्रामयशस्त्रिपाठि**पदभृद्वर्या जयन्ति ध्रुवम् ॥ २३ ॥

न्यायव्याकरणाचार्या विद्वद्वृन्दे सुपूजिताः ।
ख्याता **निरसना**ऽभिख्या **मिश्र**वंशाऽब्धिकौस्तुभाः ॥२४॥

**तात्याशास्त्र्य**पराख्यानां **रामकृष्णा**ख्यशास्त्रिणाम् ।
जयन्त्येते शिष्यवर्या विद्याविनयभूषिताः ॥ २५ ॥

मायापुरीप्रथितसंस्कृतपाठशाला-
सत्पाठकास्पदगताः सुधियामधीशाः ।
**द्रव्येशझा**महितनामजुषो जयन्ति
**श्रीरामकृष्ण**बुधराजसुशिष्यवर्याः ॥ २६ ॥

मुजफ्फरपुरे राजपाठशालैकपाठकाः ।
शिष्याः श्रीशास्त्रिवर्याणां **किशोरीझा**ऽभिधा विदः ॥ २७ ॥

हरिद्वारे ऽमरवचोनिलयाध्यापकोत्तमाः ।
**श्रीमच्छ्रीधरझा**नामशालिनोऽपि बुधास्तथा ॥ २८ ॥

कमलापुरसंराजत्पाठशालाप्रतिष्ठिताः ।
अध्यापका **महावीरझा**ऽभिधा अपि ते तथा ॥ २९ ॥

अयोध्यायां सुरगिरामालयेऽध्यापकोत्तमाः ।

**कालिकाझा**नामभृतः पण्डिता अपि तादृशाः ॥ ३० ॥

श्रीमन्तो व्याकरणाचार्याः साहित्यशास्त्रिणो बुद्धिमत्तमाः सरलस्वभावाः काशीस्थकान्यकुब्जपाठशालाकाशनाथपाठशालाप्रधानाध्यापका **विद्याविलासशुक्ल**शर्माणोऽपि शास्त्रिवराणां शिष्या एव—

सत्सम्प्रदायसुपरिष्कृतशब्दशास्त्र-
मर्मज्ञपण्डितवराः सरलस्वभावाः ।
साहित्यदर्शनविमर्शनशालिशीला
**विद्याविलास** इति नामजुषो लसन्ति ॥ ३१ ॥

श्रीमन्तो व्याकरणाचार्याः पण्डितवराः काशस्थिरणवीरसंस्कृतपाठशालाध्यापकाः **श्रीरामदेवद्विवेदि**शर्माणोऽपि शिष्या एव शास्त्रिवराणाम—

श्रीमन्तः ख्यातनामानो **रामदेवाख्य**पण्डिताः ।
जयन्ति शास्त्रिवर्याणां शिष्याः प्रियतमा इमे ॥ ३१ ॥

अन्येऽपि प्रभूतपाण्डित्याः **श्रीरामशास्त्रि परांजपे**, श्री**दामोदरशास्त्रिसहस्रबुद्धि**शर्माणः, श्रीमत्**प्रसिद्धनारायणमिश्र**शर्माणः, रायपुर चर्चमिशनस्कूलसंस्कृताध्यापका व्याकरणाचार्य श्री**राजनीतिपाण्डेय**शर्माणः, लंडनमिशनपाठशालाध्यापकाः श्री**मोतीरामपाण्डेय**व्याकरणाचार्यकाव्यतीर्थाः, वैयाकरणाः श्री**नन्दनझा**शर्माणः, प्रयागस्थ**जयकिशोरझा**शर्माणश्च श्रीमतां शास्त्रिवराणां शिष्या विराजन्ते ।

ये च शास्त्रिवराणां प्रसिद्धा अपि शिष्या अल्पायुषः पञ्चत्वं

गतास्तेष्वपि कतिपयान् कीर्तयामः।

शास्त्रे व्याकरणे प्रवीणधिषणाः साहित्यलब्धास्पदाः

ख्याताः पण्डितपुङ्गवेषु विजयां जित्वा सुभूत्यङ्किताः।

काशीस्थास्तु **गुनोरझा** पदजुषो विद्वद्वरास्तेऽधुना

भूमौ सन्ति न **रामकृष्णविदुषः** शिष्येषु सम्मानिताः॥३२॥

**कोटिभास्कर**कुलाब्धिकौस्तुभो

**रामशास्त्रि**पदभाग् बुधोत्तमः।

**रामकृष्ण**बुधशिष्यतामितः

स्वर्गतः सुयशसाऽत्र राजते ॥ ३३ ॥ इति।

बाणाऽष्टाङ्कशशाङ्कसम्मिततमे संवत्सरे वैक्रमे

ज्येष्ठे मास्यसिते दले रविदिनेऽष्टम्यां प्रभाते मुदा।

**तात्याशास्त्र्य**पराभिधस्य विदुषः **श्रीरामकृष्णा**त्मनः

पूर्णत्वं गमितं मया सुचरितं प्रीणातु तेनेश्वरः ॥ ३४ ॥

**श्रीरामकृष्ण**चरितस्मरणेनाऽमुना मम।

प्रीयतां रामकृष्णात्मा सर्वात्मा परमेश्वरः ॥ ३५ ॥

**श्रीगङ्गाधर**सद्गुरुप्रतिफलत्सारस्वतज्योतिषः

**श्रीरामा**ङ्घ्रिनिषेवणाप्तसुमतेः सन्तीर्णशास्त्राम्बुधेः।

**श्रीमद्भैरवनायका**त्मजनुषः सद्धर्मलक्ष्मीजुषः

**श्रीनारायणशर्मणः** कृतिरियं विद्वन्मुदे जायताम् ॥३६॥

इति श्री **खिस्ते**—इत्युपाख्य श्री**नारायणशास्त्रिणा** प्रणीते **विद्वच्चरितपञ्चके** श्री **तात्याशास्त्रिचरितं** नाम पञ्चमः परिच्छेदः।

॥ श्रीः ॥

# विद्वच्चरितपञ्चकस्योपसंहारः ।

भूपालो हथुवापुरन्दरवरः काशीमुपेत्यादरा-

द्वागीशप्रतिमान् प्रधानविदुषो यान् पूजयामास सः ।

भक्त्या चित्रमचीकरच्च ललितं येषां शिवश्रीजुषां

ते पञ्चाऽपि जयन्ति लोकगुरवो विद्वत्कुलाऽऽखण्डलाः ॥१॥

नूनं साम्प्रतिकेषु काशिकविपश्चिन्मौलिषु प्रायश-

स्तेषामेव महात्मनां सुविदुषां सन्त्येव शिष्याः समे ।

यैरेवाऽद्य धराऽमरै र्भगवती वाग्देवता पुत्रिणी

काले ऽस्मिन् कलिकश्मले ऽपि कलया धर्मोऽस्ति यत्संश्रयात् २॥

प्रातः संस्मरणीयचारुचरिता देवोपमास्ते बुधाः

सद्धर्माऽवनवर्द्धनव्रतजुषो याताः कथाशेषताम् ।

पाखण्डप्रचुरप्रचारविषमः कालो ऽयमद्धा तथा-

ऽप्येतत्सच्चरितं श्रुतिप्रतिभटीभूतं सतां राजताम् ॥ ३ ॥

श्रीकाशिकासुरगवीसदनेशगोपी-

नाथाऽभिधानकविराजनियोजितो ऽहम् ।

वाराणसेयवरपण्डितपञ्चकस्य

रम्यं मुदा व्यरचयं चरितं क्रमेण ॥ ४ ॥

अत्युक्ति र्न च लेशतोऽपि कलिता नो रूपकं भावितं
नाऽऽलङ्कारिकरीतिभिः स्ववचसां न्यासश्च सम्पादितः ।
यद्यद्वास्तविकं यथा समभवत्तत् केवलं वर्णितं
स्वाऽज्ञानेन तदप्यहो न सकलं ज्ञातं यथावन्मया ॥ ५ ॥

अस्मिन् पण्डितपञ्चकस्य चरिते भक्त्या प्रणीते मया
मा मा मत्सरदूषितां वितनुत स्वीयां दृशं सज्जनाः ! ।
नेदं काव्यमतोऽत्र तद्गुणगणस्याऽवेक्षणं स्यान्मुधा
दोषाणां गणनैव का प्रतिपदं ते सन्ति जानाम्यहम् ॥ ६ ॥

एवं सत्यपि कोऽपि सद्गुणकणो जागर्ति चेदीदृशे
वाग्देवीकरुणाकटाक्षविमले वाचां प्रपञ्चे मम ।
सन्तस्तं रसयन्तु निर्मलधियस्तेन श्रमो मामकः
साफल्यं कलयेत् कलानिधिकलेवेशस्य मूर्ध्नि स्थिता ॥७॥

ये वाऽस्मत्सुहृदः प्रचण्डधिषणा दोषैकदत्तेक्षणा–
स्तैः स्वीयप्रतिभाबलेन बहवो दोषास्तु लभ्या इह ।
लोको भिन्नरुचिस्तथाऽपि सुजनो मिष्टान्नमिच्छत्यहो
धन्यो ऽन्यस्तु समीहते रुचिवशात्तां शौकरीं पारणाम् ॥ ८ ॥

लोके पण्डितमानिनः परवचःश्लाघासु मौनव्रता
मान्याः स्वप्रथिमक्षतेरिव भयाद्बिभ्रत्युपेक्षां सदा ।
निष्पक्षाः सदसद्विवेककुशलाः सन्त्येव सन्तः क्वचिद्
द्वित्रा स्तन्मनसो मुदं वितनुतामेष प्रबन्धो मम ॥ ९ ॥

गौरवाच्चरितेशानां विश्वनाथोपमाजुषाम् ।
लोके विजयतामेतद् **विद्वच्चरितपञ्चकम्** ॥ १० ॥

शरवसुनिधिचन्द्रैरङ्किते वैक्रमे ऽब्दे
शितिदलकुजवारे ज्येष्ठमासे दशम्याम् ।
अवति नृपतिवर्ये भारतं **जार्जभूपे**
जयतु कृतिरियं मे पूर्णतां प्रापिता ऽद्य ॥ ११ ॥

विद्याऽक्षमालाकलितां
शशिशावकशेखराम् ॥
वीणापाणिं भजे वाणीं
जगत्कल्याणकारिणीम् ॥ १२ ॥

इति श्री **खिस्ते**-इत्युपाख्य**नारायणशास्त्रिणा** प्रणीतं
**विद्वच्चरितपञ्चकं** समाप्तम् ।



# शुद्धिपत्रम् ।

| अशुद्धम् | शुद्धम् | पृ० | पं० |
|---|---|---|---|
| वारंमुदार | वारमुदार | ११ | १८ |
| सर्वंतः | सर्वतः | १२ | १३ |
| जन्हुसुता | जह्नुसुता | १५ | ७ |
| पण्डिपरि | पण्डितपरि | १६ | ११ |
| वर्यंस्तदानीं | वर्यस्तदानीं | १८ | ११ |
| संमान | सम्मान | २५ | १० |
| चार्यंपरीक्षा | चार्यपरीक्षा | २५ | १७ |
| मर्मंज्ञता | मर्मज्ञता | २८ | १९ |
| सर्वंभूभागे | सर्वभूभागे | ३१ | २ |
| विस्तार | विस्तर | ३३ | २ |
| विंद्वत्तमो | विद्वत्तमो | ३३ | २१ |
| मार्गंमेति | मार्गमेति | ३७ | १९ |
| राकारचन्द्र | राकाचन्द्र | ३८ | १२ |
| दिवाकसोऽपि | दिवौकसोऽपि | ४० | १६ |
| पुरस्थसिंह | पुरस्थसिंह | ४४ | २ |
| दर्शंनलाभे | दर्शनलाभे | ४४ | ५ |
| रासाराऽऽसारो | रसाऽऽसारो | ४४ | २१ |
| भंक्त्या | भक्त्या | ४५ | १ |
| सर्वंविद्या | सर्वविद्या | ४५ | ५ |
| तिष्ठतो | तिष्ठतो | ४५ | १२ |
| रिथति | स्थिति | ४५ | १३ |
| सर्वंथा | सर्वथा | ४५ | १४ |

| अशुद्धम् | शुद्धम् | पृ० | पं० |
|---|---|---|---|
| मधीयन | मधीयान | ४६ | २० |
| चिंर | चिर | ४८ | ६ |
| धमँसा | धर्मँसा | ५२ | ६ |
| प्रघाना | प्रधाना | ५३ | ४ |
| गणेऽग्रण्यः | गणेऽग्रगण्यः | ६० | १५ |
| वगँ | वर्गँ | ६६ | ७ |
| सर्त्राऽतिशयिनी | सर्वाऽतिशायिनी | ७० | १० |
| सिन्दुर | सिन्दूर | ७६ | १७ |
| अशेवाङ्मय | अशेषवाङ्मय | ७७ | ८ |
| पुत्रः | पुत्राः | ७८ | १ |
| परिवारिको | पारिवारिकी | ७८ | ५ |
| पञ्चाघिकैकोन | पञ्चाधिकैकोन | ७८ | ७ |
| मेबकेवलं | मेवकेवलं | ७८ | २१ |
| सलापं | सँलापं | ७९ | १ |
| जरार्जरोऽपि | जराजर्जरोऽपि | ७९ | ८ |
| सायुज्थं | सायुज्यं | ७९ | १९ |
| शास्त्रिबराणां | शास्त्रिवराणां | ८० | ६ |
| लब्घ | लब्ध | ८१ | १४ |
| लत्सम्पन्ति | लसत्सम्पत्ति | ८१ | १४ |
| बहबो | बहवो | ८३ | ८ |
| पकाररचि[illegible]ा | पकाररचिता | ८५ | ८ |
| सवत्सरे | संवत्सरे | ८५ | ८ |
| घीमता | धीमता | ९१ | २१ |
| मगवतो | भगवतो | ९२ | १ |
| वक्रेन्दु | मक्रेन्दु | ९२ | १३ |

| अशुद्धम् | शुद्धम् | पृ० | पं० |
|---|---|---|---|
| श्रीशीव | श्रीशिव | ९३ | १ |
| मणेदार्श | मणेर्दार्श | ९३ | ८ |
| परसहंस | परमहंस | ९३ | १० |
| मघ्यय | मध्यय | ९३ | २२ |
| सर्वंतो | सर्वतो | ९५ | ६ |
| द्वावङ्गं | द्वारवङ्गं | ९५ | १५ |
| लक्ष्मीश्वदेवेन | लक्ष्मीश्वरदेवेन | ९६ | १८ |
| रमेश्वदेवं | रमेश्वरदेवं | ९८ | २१ |
| मह्नोदयः | महोदयः | ९९ | ११ |
| स्वातिरेकजकं | स्वातिरेकजनकं | ९९ | १७ |
| समासु | सभासु | १०० | १० |
| ग्रन्थेष्वपि | ग्रन्थेष्वपि | १०३ | १२ |
| महापतिं | महीपतिं | ११५ | १० |
| वितृष्णः | वितृष्णः | १२० | ९ |
| मागारथी | भागीरथी | १२१ | २१ |
| व्रतो | व्रतो | १२२ | ३ |
| कृष्णाहूयः | कृष्णाह्वयः | १२४ | २० |
| ामधान | भिधान | १२९ | १६ |
| वैक्रमेऽद्वे | वैक्रमेऽब्दे | १३१ | ३ |



# THE PRINCESS OF WALES SARASVATI BHAVANA TEXTS.

Edited by

GOPINATH KAVIRAJ, M. A.

No. 1—The Kiraṇāvālī Bhāskara, a Commentary on Udayana's Kiraṇāvalī, Dravya section, by Padmanābha Miśra.
Ed. with Introduction and Index by Gopinath Kaviraj, M.A.
Rs. 1-12

No. 2—The Advaita Chintāmaṇi, by Rañgoji Bhaṭṭa,
Ed. with Introduction etc. by Nārâyaṇa S'āstri Khiste Sāhityāchārya. Rs. 1-12

No. 3—The Vedānta Kalpalatikā, by Madhusūdana Sarasvatī.
Edited with Introduction etc. by Rāmājñā Pāṇḍeya Vyākaraṇāchārya. Rs. 1-12

No. 4—The Kusumāñjali Bodhanī, a Commentary on Udayana's Theistic Tract, Nyāya Kusumāñjali, by Varadarāja.
Ed. with Introduction etc. by Gopinath Kaviraj, M.A, Rs. 2-0

No. 5—The Rasasāra, a Commentary on Udayana's Kiraṇāvalī, Guṇa Section, by Bhaṭṭa Vādīndra.
Ed. with Introduction etc. by Gopīnath Kaviraj, M.A. Rs. 1-2

No. 6—(Part I)-The Bhāvanā Viveka by Maṇḍana Miśra, with a Commentary by Bhaṭṭa Umbeka.
Ed. with Introduction etc. by M. M. Gaṅgānātha Jhā, M. A., D. Litt. Rs. 0-12

No. 6-(Part II)—Ditto Ditto Rs. 0-12

No. 7-(Part I)-Yoginīhṛdaya dīpikā, by Amṛtānanda Nātha, being a Commentary on Yoginīhṛdaya, a part of Vāmakeśvara Tantra.
Ed. with Introduction etc. by Gopīnath Kaviraj, M..A
Rs. 1-8

No 7—( Part II ) Ditto Ditto Rs. 1-4

No. 8—The Kāvyaḍākinī, by Gaṅgānanda Kavīndra.
Ed. with Introduction etc. by Jagannātha S'āstri Hoshing Sāhityopādhyāya. Rs. 0-10-6

No. 9—(Part I)–The Bhakti Chandrikā, a Commentary on S'āṇḍilya's Bhaktisūtras, by Nārāyaṇa Tīrtha.
Ed. with a Prefatory Note by Gopinath Kaviraj, M.A.
Rs. 0–15

No. 10–(Part I)–The Siddhāntaratna, by Baladeva Vidyābhūṣaṇa.
Ed. with a Prefatory Note by Gopinath Kaviraj, M.A.
Rs. 1–2

No. 10–(Part II)—Do. Do. Rs. 2–12

No. 11–The S'rī Vidyā Ratna Sūtras, by Gauḍapāda, with a Commentary by S'añkarāraṇya.
Ed. with Introduction etc. by Nārāyaṇa S'āstrī Khiste Sāhityāchārya. Rs. 0–9

No. 12–The Rasapradīpa, by Prabhākara Bhaṭṭa.
Ed. with Introduction etc. by Nārāyaṇa S'āstri Khiste Sāhityāchārya. Rs. 1–2

No. 13–The Siddhasiddhānta Sañgraha, by Balabhadra.
Ed, with Introduction by Gopinath Kaviraj, M. A. Rs. 0–14

No. 14–The Triveṇikā, by Aśādhara Bhaṭṭa.
Ed. with Introduction by Baṭukanātha S'armā Sāhityopādhyāya, M. A. and Jagannātha S'āstri Hoshing Sāhityopādhyāya. Rs. 0–14

No. 15-(Part I)–The Tripurārahasya. (Jñāna Khaṇḍa)
Ed. with a Prefatory Note by Gopinath Kaviraj, M.A.
Rs. 0–14

No. 15–(Part–II)—Do. Do. Rs. 2–4

No. 15–(Part III)—Do. Do.

No. 16–The Kāvya Vilāsa, by Chirañjīva Bhaṭṭāchārya.
Ed. with Introduction etc. by Baṭukanātha S'armā Sāhityopādhyāya, M. A. and Jagannātha S'āstri Hosing Sāhityopādhyāya. Rs. 1–2

No. 17–The Nyāya Kalikā, by Bhaṭṭa Jayanta.
Ed. with Introduction by M. M. Gañgānātha Jhā, M. A., D. Litt. Rs. 0–14

No. 18–(Part I)–The Gorakṣa Siddhānta Saṅgraha.
Ed. with a Prefatory Note by Gopinath Kaviraj, M. A. Rs, 0–14

No. 19–( Part. I )–The Prākṛita Prakāśa by Vararuchi with the Prākṛita Sañjīvanī by Vasantarāja and the Subodhinī by Sadānanda.
Ed. with Prefatory note etc. by Batuk Nath S'armā, M. A. and Baladeva Upādhyāya, M. A. Rs 2–4

No. 19–( Part.II ) Ditto Ditto Rs. 2–12

No 19—( Part. III ) Introduction etc. ( In Preparation. )

No. 20–The Mānsatattvaviveka by Viśvanātha Nyāyapañchānana Bhaṭṭāchārya.
Edited with Introduction etc. by P. Jagannātha S'āstri Hoshing Sāhityopādhyāya, with a Foreword by Pandit Gopi Nath Kavirāja, M. A., Principal, Government Sanskrit College, Benares. Rs. 0–12

No. 21–( Part I ) The Nyāya Siddhānta Mālā by Jayarāma Nyāya Pañchanana Bhaṭṭāchārya,
Edited with Introduction etc. by Mangal Deva S'āstrī M. A., D. Phil. ( Oxon ), Librarian, Govt. Sanskrit Library, Sarasvati Bhavana, Benares. Rs. 1–2

No. 21–( Part–II ) Ditto Ditto

No. 22–The Dharmānubandhi S'lokachaturdaśī by S'ri S'eṣa Kṛṣṇa with a Commentary by Rāma Pandit.
Edited with Introduction etc. by Nārāyaṇa S'āstri Khiste Sāhityāchārya, Assistant Librarian, Government Sanskrit Library, Saraswati Bhavana, Benares.

No 23–Navarātrapradīpa by Nanda Pandit Dharmādhikārī.
Ed. with Introduction etc. by Vaijanātha S'āstrī Varakale, Dharmaśāstra–S'āstrī, Sādholāl Research Scholar, Sanskrit College, Benares, with a Foreword by P. Gopinath Kaviraj, M. A., Principal, Government Sanskrit College, Benares.

No. 24–S'rī Rāmatāpinīyopaniṣad with the Commentary called Rāmā-
Kāśikā in Pūrvatāpinī and Ānandanidhi in Uttaratāpinī
by Ānandavana.
Ed. with Introduction etc. by Anantarāma S'āstrī Vetāla
Sāhityopādhyāya, Post–Āchārya Scholar, Govt. Sanskrit
College, Benares, with a Foreword by Pandit Gopī Nātha
Kavirāja, M. A., Principal, Government Sanskrit College,
Benares.

No. 25–Sāpiṇḍyakalpalatikā by Sadāśiva deva alias Āpadeva with
a commentary by Nārāyaṇa Deva.
Edited with Introduction etc. by Jagannātha S'āstrī Hośiṅga,
Sāhityopādhyāya, Sādholāl Research Scholar, Govt. Sanskrit
College, Benares.

No. 26–Mṛgāṅkalekhā Nātikā by viśvanātha deva Kavi.
Edited with Introduction etc. by Nārāyaṇa Sāstri Khiste
Sāhityāchārya, Asst. Librarian, Government Sanskrit
Library, Benares.

# THE PRINCESS OF WALES SARASVATI BHAVANA STUDIES:

Edited by

GOPINATH KAVIRAJ, M. A.

Vol. I—

(a) Studies in Hindu Law (1) : its Evolution, by Gaṅgānātha Jhā.

(b) The view-point of Nyāya Vaiśeṣika Philosophy, by Gopi nath Kaviraj.

(c) Nirmāṇa Kāya, by Gopinath Kaviraj. Rs. 1–12

Vol. II—

(a) Paraśurāma Miśra alias Vāṇī Rasāla Rāya, by Gopinath Kaviraj.

(b) Index to S'abara's Bhāṣya, by the late Col. G. A. Jacob.

(c) S'tudies in Hindu Law (2):—its sources, by Gaṅgānāth Jha

(d) A New Bhakti Sūtra, by Gopinath Kaviraj.

(e) The System of Chakras according to Gorakṣa nātha, by Gopinath Kaviraj.

(f) Theism in Ancient India, by Gopinath Kaviraj.

(g) Hindu Poetics, by Batuka nātha S'armā.

(h) A Seventeenth Century Astrolabe, by Padmākara Dvivedi

(i) Some aspects of Vīra S'aiva Philosophy, by Gopinath Kaviraj

(j) Nyāya Kusumāñjali ( English Translation ), by Gopinath Kaviraj.

(k) The Definition of Poetry, by Nārāyaṇā S'āstri Khiste.

(l) Sondala Upādhyāya, by Gopinath Kaviraj. Rs. 5

Vol. III—

(a) Index to S'abara's Bhāṣya, by the late Col. G.A. Jacob.

(b) Studies in Hindu Law (3): Judicial Procedure: by Gaṅgā-nātha Jha.

(c) Theism in Ancient India, by Gopinath Kaviraj.

(d) History and Bibliography of Nyāya Vaiśeṣika Literature, by Gopinath Kaviraj.

(e) Naiṣadha and S'rī Harṣa by Nīlakamala Bhaṭṭāchārya.

(f) Indian Dramaturgy, by P. N. Pātankar. Rs. 5

Vol. IV—

(a) Studies in Hindu Law (4): Judicial Procedure: by Gaṅgā nātha Jhā.

(b) History and Bibliography of Nyāya Vaiśeṣika Literature, by Gopinath Kaviraj.

(c) Analysis of the Contents of the Ṛgveda–Prātiśākhya, by Maṅgala Deva S'āstrī.

(d) Nārāyaṇa's Gaṇita kaumudī, by Padmākara Dvivedi.

(e) Food and Drink in the Rāmāyanic Age, by Manmatha nātha Roy

(f) Satkāryavāda: Causality in Sāṅkhya, by Gopinath Kaviraj.

(g) Discipline by Consequences, by G. L. Sinha.

(h) History of the origin and expansion of the Aryans by A. C. Ganguly.

(i) Punishments in Ancient Indian Schools, by G.L. Sinha. Rs 5

Vol. V—

(a) Ancient Home of the Aryans and their migration to India, by A. C. Ganguly.

(b) A Satrap Coin, by Shyamalal Mehr.

(c) An Estimate of the Civilisation of the Vānaras as depicted in the Rāmāyaṇa, by Manmatha nātha Roy.

(d) A Comparison of the Contents of the Ṛgveda, Vājasaneya, Taittirīya & Atharvaveda Prātiśākhyas, by Maṅgala Deva S'āstri.

(e) Formal Training and the Ancient Indian Thought, by G.L Sinha.

(f) History and Bibliography of Nyāya Vais'eṣika Literature, by Gopinath Kavirāj.

(g) A Descriptive Index to the names in the Rāmāyaṇa, by Manmatha nāth Roy.

(h) Notes and Queries (1) Virgin Worship, by Gopinath Kaviraj. Rs. 5

Vol. VI—( In progress)

(a) Index to S'abara's Bhāṣya, by the late Col. G. A. Jacob..

(b) Some Aspects of the History and Doctrines of the Nāthas, by Gopinath Kaviraj.

(c) Studies in Hindu Law (5): Evidence, by Ganganatha Jhā.

To be had of

The Superintendent Government Press.

Allahabad. U. P.

